# बालकथाकौमुदी

सम्पादकः

डा० विश्वासः

उत्तरप्रदेशसंस्कृतसंस्थानम्

लखनऊ

प्रकाशक :
डॉ. सच्चिदानन्द पाठक
निदेशक,
उत्तर प्रदेश संस्कृत संस्थान, लखनऊ

प्राप्ति स्थान :
विक्रय विभाग
उत्तर प्रदेश संस्कृत संस्थान
नया हैदराबाद, लखनऊ–२२६ ००७
फोन : ७८०२५१

प्रथम संस्करण :
वि. सं. २०५८, (२००१ ई.)

प्रतियाँ : ११००

मूल्य : रु. ५०/– (पचास रुपये)


अक्षरसंयोजनम्–
'संस्कृतभारती', बेङ्गलूरु

मुद्रक : शिवम् आर्ट्स निशातगंज, लखनऊ–२२६ ००७

# पुरोवाक्

संस्कृतसाहित्ये कथाग्रन्थानां संख्या न तथा विपुला विद्यते, यथा काव्यग्रन्थानाम्। तत्रापि बालकथायाः प्रणयनं तु स्वल्पतरमेव दृश्यते। वस्तुतः कथामाध्यमेन बालकानां हृदये ज्ञानार्जनार्थं जिज्ञासाङ्कुरस्य स्फुरणं जायते। व्यावहारिकशिक्षणं, सामान्यज्ञानं, लोकाचारपरम्परायाश्च ज्ञानं कथामाध्यमेन सरलतया पाठयितुं शक्यते। संस्कृतेः सभ्यताश्च कथया बोधो भवति। अतो बालकानामौचित्यविषये नास्ति कोऽपि विवादः। हितोपदेशे (१/९९) सम्यगेवाभिहितम् ''पटुत्वं सत्यवादित्वं कथायोगेन बुध्यते''। अर्थात् कथाद्वारा कस्यापि जनस्य पटुत्वस्य तथा अभिभाषणस्य सम्यक् समीक्षणं कर्तुं शक्यते। विश्रुतस्य पञ्चतन्त्रस्य नाम को न जानाति। तस्य रचनाकार आचार्य विष्णुशर्मकथायाः महत्वविषये उक्तवान्—''बुद्धिप्रकाशस्य अनुपमेयमिदम् कथानुष्ठानम्।'' संक्षेपमात्रेण शास्त्राणां प्रबोधने कथैव समर्था भवति। यत्र व्याकरणं, धर्मशास्त्राणि, अर्थशास्त्राणि; कामशास्त्राणि काव्यादीनि च शास्त्राणि बहुभिर्वर्षैरवगन्तव्यानि भवन्ति, तत्र कथा स्वल्पेनैव कालेन सारभूतानां तथ्यानां सम्यक् ज्ञानं कारयति। विषयेऽस्मिन् सत्यमेवोक्तं—

''अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथाऽऽयुर्बहवश्च विघ्नाः।
सारं ततो ग्राहमपास्य फल्गुं हंसैर्यथा क्षीरमिवाम्बुमध्यात्।।''

अनेन ज्ञायते यत् प्राचीनकालतः एव बालकानां बुद्धिविकासार्थम् बालकथायाः लेखने संस्कृतज्ञाः दत्तावधाना आसन्'। तेषां परिश्रमस्यैव फलं पञ्चतन्त्रम्, हितोपदेशादिकं च कथारत्नम्। साम्प्रतं समाजे बहुपरिवर्तनम् जातम्। अतः नवीनपद्धत्या कथासु नूतनकथानकानाम् सन्निवेशं कृत्वा कथालेखनस्य आवश्यकता अनुभूयते; केन्द्रशासनस्य मानवसंसाधनमन्त्रालयेन बालकथायाः प्रकाशनार्थं यत् साहाय्यं प्रदत्तम् एतदर्थं तस्य सर्वे अधिकारिणः धन्यवादार्हाः सन्ति। प्रस्तुतस्यास्य ''बाल कथा कौमुदी'' पुस्तकस्य सम्पादनं संस्कृतभारत्याः वरिष्ठकार्यकर्ता ''डॉ. विश्वासमहोदयः'' सुमहत्परिश्रमेण कृतवान्, एतदर्थं तस्मै साधुवादं ददामि। पुनश्च कथा लेखका अपि भृशम् अभिनन्दनीयाः सन्ति। उ.प्र. संस्कृतसंस्थानस्य निदेशकपदमलङ्कुर्वाणाः डॉ. सच्चिदानन्दपाठकमहोदयास्तथान्ये च कार्यालयीयसहयोगिनः धन्यवादार्हतां भजन्ते।

संस्कृतदिवसः
वि.सं. २०५८
४ अगस्त, २००१

डॉ. नागेन्द्रपाण्डेयः
अध्यक्षः
उ. प्र. संस्कृतसंस्थानम्

# सम्पादकीयम्

को वा बालः नासक्तः कथासु ? सर्वेऽपि बालाः कथाश्रवणम् इच्छन्ति एव । कथाभिः बालानां कल्पनायाः विस्तारः भवति, लोकज्ञानं वर्धते, व्यवहारशिक्षणं च भवति । अतः सुसंस्कारदायिन्यः, प्रेरणादायिन्यश्च कथाः श्रावणीयाः तान् उद्दिश्य ।

परम् अद्यत्वे एतादृशीनां कथानां सङ्ग्रहः कदाचित् दुर्लभः एव । अतः अत्र तादृशः कश्चन प्रयासः कृतः अस्ति । देशस्य नानाभागे निवसद्भ्यः लेखकेभ्यः लिखिताः अनूदिताश्च उत्तमाः काश्चन कथाः सम्पाद्य अत्र प्रकाशिताः सन्ति ।

उत्तरप्रदेशसंस्कृतसंस्थानेन 'बालकथाकौमुदी'नामकः एषः सङ्ग्रहः प्रकाश्यते इति तु महत् सन्तोषास्पदम् । येषां प्रयासेन एतत् शक्यम् अभवत् ते संस्थानाध्यक्षाः, सदस्याश्च अवसरेऽस्मिन् कृतज्ञतापूर्वकं स्मर्यन्ते ।

येषां कथाः अत्र सङ्कलिताः सन्ति ते सर्वेऽपि कथाकाराः धन्यवादम् अर्हन्ति एव । सुन्दरचित्राणां निमित्तं कलाकारः अरसुवर्यः, अक्षरसंयोजननिमित्तं संस्कृतभारत्याः सङ्गणकविभागस्य कार्यकर्त्र्यश्च अभिनन्द्यन्ते ।

सर्वेऽपि बालाः, छात्राः, संस्कृतभाषाभ्यासिनश्च एतासां कथानां पठनेन लाभान्विताः भवन्तु इति आशास्यते ।

वृष सं।। ज्येष्ठशुद्ध-चतुर्दशी
५.६.२००१

डा॰ विश्वासः
सम्पादकः

# अनुक्रमणिका

# १. उचिता भिक्षा

• *(सं) उदयशङ्करभट्टः*

एकदा महात्मा बुद्धः भिक्षार्थं कस्यचित् धनिकस्य गृहं गतवान् । गृहस्य पुरतः स्थित्वा 'भिक्षां देहि' इति हस्तौ प्रसारितवान् ।

सः धनिकः बुद्धस्य विख्यातिं पूर्वमेव श्रुतवान् आसीत् । तादृशः महात्मा स्वगृहम् आगतवान् इति सः अतीव प्रसन्नः अभवत् । सः उक्तवान् - ''भगवन् ! भवतः भिक्षादाने अहं समर्थः अस्मि । मम निकटे धनकनकादीनि, वस्त्राणि धान्यानि च सन्ति । भवान् यत् इच्छति तत् ददामि । वदतु, किम् इच्छति भवान् ?'' इति ।

''भिक्षारूपेण भवान् यत् ददाति तदेव अहं कृतज्ञतापूर्वकं स्वीकरोमि । परन्तु भवदीयमेव यत् अस्ति तत् केवलम् अहं स्वीकरोमि'' इति मन्दहासपूर्वकम् उक्तवान् बुद्धः ।

'एतस्मिन् गृहे यत् अस्ति तत् सर्वम् अपि मदीयमेव । तत्र कः संशयः' इति चिन्तयन् धनिकः गृहस्य अन्तः गतवान् । 'भूरिदानेन बुद्धः सुप्रसन्नः करणीयः' इति निर्णयं कृत्वा सुवर्णनाणकानि आनीय, तैः पूर्णम् अञ्जलिम् अग्रे प्रसार्य 'भगवन्, स्वीकरोतु' इति उक्तवान् ।

परन्तु बुद्धः तानि न स्वीकृतवान् । उक्तवान् च - ''हा हन्त ! एतानि नाणकानि भवदीयानि न । अतः अहं न स्वीकरोमि ।''

तदा धनिकः कुतूहलेन पृष्टवान् - ''कथं एतानि मदीयानि न ?''

बुद्धः उक्तवान् - ''लक्ष्मीः चञ्चला । सा कदाचित् भवतः गृहे निवसति, कदाचित् अन्यत्र गच्छति । अतः चञ्चला लक्ष्मीः भवदीया एव भवितुं न अर्हति'' इति ।

तदा धनिकः पुनरपि गृहस्य अन्तः गतवान् । एकं पीताम्बरम् आनीय उक्तवान् - ''भगवन् ! एतत् तु मदीयमेव । कृपया एतत् स्वीकरोतु'' इति ।

बुद्धः तदपि निराकृतवान् । एवमेव धनिकः स्वगृहे विद्यमानम् एकैकमपि वस्तु आनीय दर्शितवान् । परन्तु बुद्धः ''तत्र एकमपि भवदीयं न'' इति वदन् निराकृतवान् ।

अन्ते धनिकः कुपितः अभवत् । कोपम् असहमानः सः ''किम् एवम् अर्थहीनं रटति भवान् ?'' इति वदन् बुद्धस्य कपोले चपेटिकां दत्तवान् ।

बुद्धस्य कपोलः रक्तवर्णः जातः । तथापि मन्दस्मितः सन् सः उक्तवान् - ''मित्र ! एतत् तु अवश्यं भवदीयम् एव । अहम् एतत् ससन्तोषं स्वीकृतवान् अस्मि'' इति ।

बुद्धस्य एतादृशं वचनं श्रुत्वा सः धनिकः अत्यन्तं प्रभावितः अभवत् । सः बुद्धस्य चरणयोः पतितवान् । उक्तवान् च - ''भगवन् ! अहम् अद्य पर्यन्तं मोहान्धकारे मग्नः आसम् । भवतः ईदृशेन व्यवहारेण मम नेत्रे उन्मीलिते । कृपया मां भवतः शिष्यं करोतु'' इति ।

बुद्धः प्रीत्या तस्य ललाटं चुम्बितवान् । तं स्वशिष्यं कृतवान् । गच्छता कालेन सः बुद्धस्य प्रियशिष्येषु अन्यतमः अभवत् ।

□□

# २. ब्रह्मणः पितामहः

कस्मिंश्चित् ग्रामे कश्चन अजपालः आसीत् । तस्य शताधिकाः अजाः आसन् । तेषु एकः वृद्धः अजः आसीत् । प्रतिदिनं सर्वे अजाः चरणार्थं वनं गच्छन्ति स्म । गमनसमये सः वृद्धः अजः सर्वेषाम् अपेक्षया पृष्ठतः गच्छति स्म ।

एकदा वनं गताः अजाः सायङ्काले यथापूर्वं वनात् प्रत्यागच्छन्तः आसन् । वृद्धः अजः तु पुरतः दृश्यमानं पर्णं तृणं च खादन् मन्दं मन्दम् आगच्छन् आसीत् । अत्रान्तरे अन्धकारः अपि प्रसृतः । सर्वे अजाः शीघ्रम् अग्रे गतवन्तः । एषः वृद्धः अजः तु अन्धकारे मार्गभ्रष्टः अभवत् । किङ्कर्तव्यतामूढः सन् सः ततः धावनम् आरब्धवान् । अन्ततो गत्वा वने किञ्चिद् दूरे विद्यमानं जीर्णं देवालयं प्रविष्टवान् । यदा कदा वा मार्गभ्रष्टाः प्राणिनः तस्मिन् देवालये तिष्ठन्ति स्म । अजः अपि तत्र एकस्मिन् कोणे निश्चिन्ततया निद्रां कृतवान् ।

मध्यरात्रे कश्चित् सिंहः तेन मार्गेण एव आगतवान् । देवालयस्य अन्तः कश्चित् मृगः अस्ति इति सः कथमपि ज्ञातवान् । सन्तोषेण गर्जितवान् च । तदा अजः महता भयेन द्वारं पिधाय अर्गलं योजितवान् ।

सिंहः द्वारस्य पुरतः स्थित्वा उच्चस्वरेण - "कः अस्ति अन्तः ? अहं सिंहः अस्मि । निश्चयेन भवन्तं खादामि एव । स्वयमेव बहिः आगच्छतु, नो चेत् अहं भवतः उपरि आक्रमणं करोमि" इति पुनः गर्जितवान् ।

अजः मनसि एव एकम् उपायं चिन्तितवान् । अनन्तरं स्वश्मश्रु द्वारस्य रन्ध्रे स्थापयित्वा सः सिंहगाम्भीर्येण उक्तवान् - "भोः, अलं गर्जनेन । जगतः पितामहस्य ब्रह्मणः पितामहः अहम् । व्रतस्य कारणेन एतावद्दीर्घकालपर्यन्तम् अपि अहं जीवितवान् अस्मि । मम एतत् श्मश्रु दृष्ट्वा एव भवान् ज्ञातुं शक्नुयात् यत् अहं ब्रह्मणः पितामहः इति । 'शताधिकगजान्, सहस्राधिकव्याघ्रान्, एकं सिंहं च यावत् न खादामि तावत् मुखक्षौरं न करोमि' इति शपथं कृतवान् अस्मि । एतावता एव गजान् व्याघ्रान् च खादितवान् । इदानीं सिंहस्य पर्यायः । एतत् एकं समापयामि चेत् कृतकृत्यः भविष्यामि अहम् । कोटिवर्षाणां मम जीवनं सार्थकं भविष्यति । एतस्मिन् जीर्णदेवालये एव मम व्रतं समाप्तं भविष्यति । विनायासेन सिंहः अपि लब्धः अस्ति इति महान् सन्तोषः । भवान् तत्रैव तिष्ठतु । अहं स्नानं कृत्वा शीघ्रम् आगच्छामि" इति ।

अजस्य श्मश्रु दृष्ट्वा सिंहः 'निश्चयेन एषः ब्रह्मणः पितामहः' इति मत्वा भयेन विनाशब्दं ततः पलायितवान् । अजः अपि प्रातःकालपर्यन्तं तत्र एव स्थित्वा ततः सुरक्षितं गृहम् आगतवान् ।

❑❑

# 3. मण्डूकरटनं किमर्थम् ?

• *(सं) रामचन्द्र भट्टः*

कश्चन ग्रामः । तत्र कश्चन शुभ्रः तडागः आसीत् । तस्मिन् तडागे बहवः मण्डूकाः निवसन्ति स्म । कश्चन बृहत् मण्डूकः तेषां महाराजः आसीत् ।

तदा भारते आङ्ग्लजनानां शासनम् आसीत् । सर्वेषाम् अपि आङ्ग्लभाषायाः विषये महान् व्यामोहः । मण्डूकराजस्य अपि आङ्ग्लभाषाव्यामोहः जातः । तया भाषया एव व्यवहरणीयं, शासनं च करणीयम् इति तस्य महती इच्छा आसीत् । तदर्थं भाषाध्ययनं करणीयं खलु !

तडागस्य समीपे एव कस्यचित् आङ्ग्लाधिकारिणः गृहम् आसीत् । तस्य पत्नी प्रतिदिनं ततः एव जलं नयति स्म । मण्डूकराजः तया सह तस्याः गृहं गत्वा भाषाध्ययनं करणीयम् इति चिन्तितवान् ।

एकस्मिन् दिने सा यदा जलं नेतुं तडागम् आगतवती, तदा मण्डूकराजः जलेन सह तस्याः कलशं प्रविश्य अधिकारिणः गृहं प्राप्तवान् । गृहे द्वारस्य कोणे स्थित्वा गृहजनानां सम्भाषणं शृण्वन् आङ्ग्ल-भाषाध्ययनम् आरब्धवान् सः ।

त्रयः मासाः अतीताः । महता कष्टेन मण्डूकराजः 'वाटर्' इति एकं शब्दं ज्ञातवान् । तेन एव सन्तुष्टः सः महता गर्वेण ततः प्रस्थाय तडागम् आगतवान् ।

यदा सः तडागम् आगतवान्, तदा वृष्टिकालः आरब्धः आसीत् । सर्वेषां मण्डूकानां गृहाणि जलेन आवृतानि आसन् । ते सर्वे अपि तीरे स्थितवन्तः आसन् । आङ्ग्लभाषाध्ययनं समाप्य आगतवन्तं महाराजं दृष्ट्वा सर्वे अपि तं नमस्कृतवन्तः । तेषु एव कश्चन ज्येष्ठः मण्डूकः – ''महाप्रभो ! वृष्टेः कारणतः अस्माकं गृहाणिं जलावृतानि सन्ति । तस्मात् वयं सर्वे निर्गतिकाः स्मः'' इति निवेदितवान् ।

तत् ज्ञात्वा मण्डूकराजः जलावृतं तडागं च दृष्ट्वा 'वाटर् वाटर् ' इति रोदनम् आरब्धवान् । अन्ये अपि महाराजस्य रोदनं दृष्ट्वा 'वाटर् वाटर्' इति रोदनम् आरब्धवन्तः ।

ततः प्रभृति वृष्टिकाले यदा सर्वं जलावृतं भवति तदा मण्डूकाः आगत्य 'वाटर् वाटर्' इति रोदनस्य आरम्भं कुर्वन्ति ।

□□

# ४. समप्राधान्यम्

• प्रा. सौ. शान्ता मुरलीधर कुलकर्णी

कस्मिंश्चित् ग्रामे मित्रद्वयं निवसति स्म । तयोः एकतरः भाग्यवादी आसीत् । अपरः कर्मवादी । भाग्यवादी चिन्तयति स्म यत् 'सर्वं दैवकारणात् एव भवति । यदि दैवगतिः उत्तमा अस्ति तर्हि अप्रयत्नेन अपि प्रभूतं धनं लभ्यते ।'

परन्तु कर्मवादिनः चिन्तनं तु सर्वथा भिन्नम् आसीत् । तस्य सम्पूर्णः विश्वासः कर्मणि एव । प्रयत्नात् एव सर्वं फलति इति तस्य अभिप्रायः आसीत् ।

कदाचित् तयोः मध्ये विवादः प्रवृत्तः । बहुकालपर्यन्तं विवादे जाते सति अपि यदा निर्णयः न जातः तदा तौ महाराजस्य समीपं गतवन्तौ । ''महाराज ! भवान् एव निर्णयं वदतु यत् भाग्यं श्रेष्ठम्, उत कर्म'' इति तं निवेदितवन्तौ ।

महाराजः तौ द्वौ अपि बन्धिनौ कृत्वा कारागृहं प्रेषितवान् । उक्तवान् च - "त्रीणि दिनानि यावत् भवतोः कारागृहवासः भविष्यति । तावता वादनिर्णयः स्वयमेव भविष्यति" इति ।

कारागृहे तयोः भोजनस्य पानस्य वा कापि व्यवस्था न आसीत् । बुभुक्षया पिपासया च तौ द्वौ दुर्बलौ जातौ ।

तृतीये दिने रात्रिसमये महाराजः गुप्तमार्गेण कारागृहस्य अन्तः गतवान् । पायसेन पूरितम् एकं पात्रं तत्र स्थापितवान् च । कारागृहे तदा अन्धकारः आसीत् । पायसस्य सुगन्धः सर्वत्र प्रसृतः । तदा प्रयत्नवादी चिन्तितवान् - 'एषः मम परीक्षाकालः । समीपे एव कुत्रापि पायसम् अस्ति । यदि अहं प्रयत्नं करोमि तर्हि तत् पायसं प्राप्तुं शक्नोमि ।

एवं चिन्तयित्वा सः महता प्रयत्नेन हस्तपादं सञ्चालयन् पायसपात्रस्य समीपम् आगतवान् । पायसं खादितुम् आरब्धवान् च । तदा एकः पाषाणखण्डः तस्य मुखे लग्नः अभवत् ।

सः चिन्तितवान् - 'एतेन पाषाणखण्डेन अहं भाग्यवादिनं प्रहरामि । वदामि च - 'प्रयत्नेन एव मम उदरं पूर्णम् ।'

अत्रान्तरे भाग्यवादी चिन्तयति - 'एषः मम परीक्षाकालः । समीपे कुत्रापि पायसम् अस्ति । यदि तत् मम भाग्यायत्तम् अस्ति तर्हि निश्चयेन प्राप्नोमि । तदर्थं प्रयत्नं तु न करिष्यामि' इति ।

तस्मिन् एव क्षणे एकः पाषाणखण्डः तस्य उपरि पतति । तदा सः 'एषः पाषाणखण्डः एव मम भाग्यायत्तः स्यात् । एतेन एव मम कार्यपूर्तिः भवेत्' इति चिन्तयित्वा तं स्वसमीपे रक्षितवान् । ततः तेन एव क्रमेण दशाधिकाः पाषाणखण्डाः तेन प्राप्ताः । सर्वान् अपि सः रक्षितवान् ।

प्रातःकाले कारागृहस्य द्वारम् उद्घाटितं भवति । महाराजः, अमात्यः, अन्ये च जनाः तत्र आगच्छन्ति । ते सर्वे पश्यन्ति, यत्नवादी पायसभक्षणेन संतृप्तः अस्ति । सर्वे जयकारेण तम् अभिनन्दन्ति ।

किन्तु यदा ते भाग्यवादिनं पश्यन्ति तदा तु विस्मिताः भवन्ति - यतः तस्य पुरतः दशाधिकानि अमूल्यानि रत्नानि आसन् ! रात्रौ शिलाखण्डः इति मत्वा तानि एव तेन रक्षितानि आसन् । सर्वे जयकारेण तम् अपि अभिनन्दितवन्तः । 'महाराजः इदानीं कीदृशं निर्णयं वदति' इत्येव सर्वेषां विचारः ।

तदा महाराजः उक्तवान् - "भोः जनाः ! निरर्थकः एतयोः विवादः । यतः यत्नेन विना दैवं न फलति, दैवेन विना यत्नः अपि न सिद्ध्यति । अतः तयोः समप्राधान्यमेव" इति ।

□□

# ९. मन्त्रिणः युक्तिः

• सि. आर्. आनन्दः

पुरातनकाले कश्चन महाराजः आसीत् । सः राज्यशासने अनासक्तः आसीत् । अतः गच्छता कालेन राज्यस्य दुःस्थितिः आगता ।

महाराजस्य अनेके मन्त्रिणः आसन् । ते सर्वे अपि महाराजः इव भोगलोलुपाः एव आसन् । अन्ये केचन सज्जनाः अपि मन्त्रिणः आसन् । परं ते 'यदि वयं किमपि वदेम तर्हि महाराजः कुपितः भवेत्' इति चिन्तयन्तः किमपि न वदन्ति स्म । तथापि तेषु अन्यतमः मन्त्री 'अहं कथमपि महाराजं बोधयामि' इति निश्चयं कृतवान् ।

एकस्मिन् दिने सायङ्काले सः मन्त्री महाराजेन सह वायुविहारार्थम् उद्यानं गतवान् । ततः प्रत्यागमनसमये अन्धकारः व्याप्तः आसीत् । पक्षिणां कलरवः अपि श्रूयते स्म । तदा मन्त्री पक्षिणां कलरवं श्रद्धया कर्णौ दत्त्वा श्रोतुम् आरब्धवान् ।

महाराजः आश्चर्यचकितः भूत्वा तं – ''किं शृणोतिं भोः भवान् ?'' इति पृष्टवान् ।

तदा मन्त्री उक्तवान् – ''अहं पक्षिणां भाषां जानामि । इदानीं द्वयोः पक्षिणोः वार्तालापः प्रचलति । तत् शृण्वन् अस्मि'' इति ।

महाराजः कुतूहलेन – ''कीदृशः वार्तालापः कृतः ताभ्याम् ?'' इति पृष्टवान् ।

मन्त्री तत् वक्तुं न इष्टवान् इव । तदा महाराजः पुनः पुनः अनुरोधं कृतवान् । अन्ते मन्त्री उक्तवान् – ''महाराज ! ते पक्षिण्यौ । एका पक्षिणी स्वपुत्रीम् अन्यस्याः पुत्राय दातुम् इच्छति । परं सा पक्षिणी तदर्थं वरदक्षिणाम् इच्छति । वरदक्षिणारूपेण भवत्या मह्यं पञ्चाशत् विनष्टाः ग्रामाः दातव्याः'' इति सा उक्तवती ।

महाराजस्य महत् आश्चर्यम् अभवत् । सः इतोऽपि कुतूहलेन पृष्टवान् – ''तदा अन्या पक्षिणी किम् उत्तरम् उक्तवती ?''

''सा तु वदति – 'पञ्चाशत् एव किमर्थम् ? अहं शतं ग्रामान् अपि दातुं शक्नोमि' इति ।

'कथं भवती तथा वदति ?' इति सा पक्षिणी पृष्टवती । तदा एषा उक्तवती – 'यावत् एषः महाराजः एतस्य राज्यस्य शासनं करोति तावत् विनश्यतां ग्रामाणां संख्या न्यूना न भवति एव । अतः अहं धैर्येण उक्तवती' इति ।'' – मन्त्री विवरणं कृतवान् ।

एतत् श्रुत्वा महाराजः मौनी अभवत् । तद् दृष्ट्वा मन्त्री पृष्टवान् – ''प्रभो ! एतादृशम् अपभाषणं कुर्वत्यौ ते पक्षिण्यौ मारयामि किम् ?'' इति ।

''मास्तु, मास्तु'' – इति तं निवारयन् महाराजः उक्तवान् – ''भवतः अभिप्रायः मया अवगतः । अहं भवन्तं प्रधानमन्त्रिणं करिष्यामि । भवान् तत् पक्षिवचनम् असत्यं यथा भवेत् तथा कर्तुं यद् यद् करणीयं तत् सर्वमपि करोतु । मया किं करणीयम् इत्यपि सूचयतु । सर्वे वयं मिलित्वा राज्यं सुभिक्षं करिष्यामः'' इति ।

महाराजस्य ज्ञानोदयः अभवत् इति कृत्वा मन्त्री नितरां सन्तुष्टः अभवत् ।

# ६. दूरदृष्टिः

• *(सं) सावित्री प्रताप*

कस्मिंश्चित् राज्ये कश्चन महाराजः आसीत् । तस्य महामन्त्री अतीव चतुरः बुद्धिमान् च आसीत् । मन्त्रिणः एकः अभ्यासः आसीत् यत् सः सर्वदा – 'सर्वम् अस्माकं हिताय एव' इति वदति स्म ।

एकदा महाराजस्य दक्षिणहस्तस्य एका अङ्गुली कर्तिता अभवत् । महामन्त्री तत् दृष्ट्वा अपि – ''इदम् अपि अस्माकं हिताय एव'' इति उक्तवान् ।

मन्त्रिणः एतत् वचनं राज्ञः इष्टाय न अभवत् । सः कुपितः सन् मन्त्रिणं कारागारे निक्षिप्तवान् । कारागारे सन् अपि मन्त्री आत्मानं प्रति – 'इदमपि हिताय एव' इति उक्तवान् ।

परेद्यवि महाराजः मृगयार्थं वनं गतवान् । मन्त्री कारागारे अस्ति इति कारणतः एकाकिना एव तेन गन्तव्यम् आपतितम् । वने सः बहुदूरं गतवान् । घोरे वने अटन्तम् एकाकिनं महाराजं दृष्ट्वा केचन वनवासिनः (आटविकाः) तत्र आगतवन्तः । ते महाराजं गृहीत्वा तस्य हस्तपादं रज्ज्वा बद्धवन्तः । ततः तं वनदेवतायाः मन्दिरम् आनीतवन्तः । महाराजस्य वधं कृत्वा देवतायै उपहाररूपेण तस्य शरीरं समर्पणीयम् इति तेषां विचारः आसीत् । मारणार्थम् उद्युक्ताः ते महाराजस्य प्रत्यङ्गं परिशीलितवन्तः । तदा तैः महाराजस्य अङ्गुलिविहीनः दक्षिणहस्तः दृष्टः । ततः 'विकलाङ्गः एषः देवतायै समर्पयितुम् अयोग्यः' इति चिन्तयित्वा तं बन्धमुक्तं कृतवन्तः ।

ततः राज्यं प्रति आगमनसमये मार्गे महाराजः मन्त्रिणः 'इदम् अस्माकं हिताय एव' इति वचनं स्मृत्वा 'सः मन्त्री सत्यमेव उक्तवान् आसीत्' इति चिन्तयन् प्रासादम् आगतवान् ।

राजप्रासादम् आगत्य सः सर्वप्रथमं कारागृहवासतः मन्त्रिणः विमोचनं कृतवान् । ततः तं वने प्रवृत्तां घटनां निवेदितवान् । अन्ते च उक्तवान् - ''भवता उक्तं सर्वं सत्यमेव आसीत् । मम रक्षणस्य कारणम् अङ्गुली-विहीनता एव । किन्तु मम कश्चन संशयः अस्ति । यदा अहं भवन्तं कारागारे स्थापितवान् तदा अपि भवान् 'इदम् हिताय एव' इति उक्तवान् । तत्तु वचनं निरर्थकमेव खलु ?'' इति ।

''महाराज ! यदि अहं कारागारे न अभविष्यं तर्हि भवता सह वनम् आगमिष्यम् । वने वनवासिनः विकलाङ्गं भवन्तं त्यक्त्वा सर्वाङ्गसहितं माम् अमारयिष्यन् एव । अहं कारागारे आसम् । अतः एव अहम् इदानीं रक्षितः अस्मि खलु !'' इति सहासं निवेदितवान् महामन्त्री ।

मन्त्रिणः चतुरतां दूरदृष्टिं च ज्ञात्वा आनन्दितः महाराजः प्रेम्णा तस्य आलिङ्गनं कृतवान् ।

# ७. यथा सङ्गः तथा ..

• *एम्.ए. अनन्तसुदर्शनः*

कस्मिंश्चित् राज्ये कश्चन नृपः आसीत् । सः अत्यन्तं प्रजावत्सलः आसीत् । प्रजानां योगक्षेमविचारणार्थं सः तदा तदा राज्ये सर्वत्र अटति स्म । एवं सञ्चरन् सः कदाचित् बल्लाळपुरी-नामकं ग्रामम् आगतवान् ।

तत्र महाराजस्य महत् आश्चर्यं जातम् । यतः तत्रत्याः जनाः सर्वेऽपि अत्यन्तम् असंस्कृताः, रूक्षाः, अनागरिकाश्च आसन् । तेषां सम्भाषणशैली तु अतीव ग्राम्या आसीत् । तत् दृष्टवतः महाराजस्य महत् दुःखम् अपि जातम् ।

ततः राजभवनं प्रतिनिवृत्तः सः चिन्तितवान् – 'असंस्कृतान् तान् कथं सुसंस्कृतान् करोमि ?' इति । अनन्तरं सः निर्णीतवान् यत् 'आस्थानपण्डितः नारायणशास्त्री महान् विद्वान् अस्ति । सः भाषाप्रवीणः सकलशास्त्रज्ञः च अस्ति । सः एव एतस्मिन् कार्ये समर्थः' इति ।

अनन्तरं सः नारायणशास्त्रिणम् आहूतवान् । तम् उक्तवान् च – "भोः शास्त्रिवर्य ! बल्लाळपुरीग्रामस्य जनाः अत्यन्तम् असंस्कृताः, अनागरिकाः, रूक्षाः च सन्ति । भवान् तत्र गत्वा तैः सह निवासं करोतु । प्रयत्नेन तान् सुशिक्षितान् करोतु । नागरिकव्यवहारं तान् पाठयतु" इति ।

नारायणशास्त्री अपि "यथा भवान् आज्ञापयति" इति अङ्गीकृतवान् । महाराजः तस्य प्रेषणस्य व्यवस्थां कृतवान् । ग्रामे तस्य निवासादि-सर्वाः अपि व्यवस्थाः कल्पितवान् ।

तत्र गमनानन्तरं नारायणशास्त्री प्रथमतया सर्वान् अपि ग्रामीणान् एकत्र मेलितवान् । तान् उद्दिश्य सुसंस्कृतेः विषये विवरणपूर्वकं व्याख्यानम् आरब्धवान् ।

तन्मध्ये एव कश्चन ग्रामीणः ग्राम्यभाषया एव तम् उच्चैः उक्तवान् – "किं रे, किम् उच्यते भवता ? भवदीया ग्रन्थभाषा अस्मभ्यं न रोचते । अस्मदीया ग्राम्यभाषा एव समीचीना । यदि किमपि वक्तव्यम् अस्ति, तर्हि तया भाषया एव वदतु" इति ।

नारायणशास्त्री किमपि कर्तुम् एव न शक्तवान् । एवमेव चत्वारः मासाः अतीताः । सः ग्रामीणैः जनैः सह मिलित्वा जीवनं यापयति स्म ।

एकदा महाराजः बल्लाळपुरी-ग्रामे संस्कृतिशिक्षणकार्यं कथं प्रचलति इति ज्ञातुं तत्र आगतवान् । यदा सः नारायणशास्त्रिणः गृहस्य पुरतः आगतवान् तदा तत्र अन्येन सह उच्चैः वार्तालापं कुर्वन्तं कञ्चित् दृष्टवान् । सः उष्णीषम्, युतकम्, अर्धोरुकम् – इत्यादि ग्राम्यवेषं धृतवान् आसीत् ।

महाराजः तं दृष्ट्वा पृष्टवान् – "भोः ! कः भवान् ?" इति ।

तदा सः ग्राम्यभाषया एव उक्तवान् – "अहं भोः ! बेल्लाळे नारायणः" इति ।

राजा पुनः पृष्टवान् – "बेल्लाळे नारायणः इत्युक्ते कः ?" इति ।

सः पुरुषः उक्तवान् – "अहमेव भोः ! पूर्वं भवत्सविधे आसं खलु ! सः एव बेल्लाळे नारायणः अहम्" इति ।

महाराजस्य मनसि दुःखम् आश्चर्यं च युगपत् एव सञ्जातम् । 'किम् एतत् प्रवृत्तम् ! आस्थानपण्डितः, भाषाप्रवीणः, सकलशास्त्रज्ञः नारायणशास्त्री अपि असंस्कृतः अनागरिकः च जातः खलु !' इति ।

अनन्तरं सः 'मनुष्यस्य स्वभावः एव एषः । सः यादृशे परिसरे भवति तादृशम् एव रूपं प्राप्नोति' इति कथमपि आत्मानं समाधाय स्व-आस्थानं प्रतिनिवृत्तवान् ।

□□

# ८. मातृऋणम्

• *पवनकुमार रायः*

देवव्रतः सुप्रसिद्धः महाराजः । सः कदाचित् स्वमातरं पद्मावतीम् उक्तवान् – ''अम्ब ! पितुः आज्ञानुसारेण अहं राज्यस्य उत्तरदायित्वं निर्वहन् अस्मि । राज्ये सर्वाः प्रजाः सुखसम्पन्नाः सन्ति । अहं गुरुणा प्रदत्तायाः शिक्षायाः सदुपयोगं कृतवान् अस्मि । अतः इदानीम् अहं भूमेः, गुरोः, पितुः, मातुः च ऋणात् मुक्तः अस्मि'' इति ।

पुत्रस्य देवव्रतस्य एतादृशीं वाणीं श्रुत्वा माता पद्मावती हसितवती । उक्तवती च – ''पुत्र ! भवान् सर्वेभ्यः ऋणेभ्यः मुक्तः अस्ति इति तु सत्यमेव । परन्तु मम एका अपेक्षा अस्ति । तां भवान् पूरयतु'' इति ।

''का सा अपेक्षा?'' इति पृष्टवान् देवव्रतः ।

''भवान् यदा शिशुः आसीत् तदा भवन्तं मम शय्यायां शाययित्वा आनन्दम् अनुभवामि स्म ।

अद्यापि भवान् मया सह स्वपितु येन भवतः शैशवं स्मरन्ती अहम् सुखम् अनुभवामि'' – इति उक्तवती महाराज्ञी ।

देवव्रतः अङ्गीकृतवान् । तस्मिन् दिने रात्रौ सः मातुः शयनागारे एव सुप्तवान् ।

किञ्चित्कालानन्तरं पद्मावती पुत्रम् उक्तवती – ''वत्स ! महती पिपासा बाधते । पानार्थं किञ्चित् जलम् आनयतु'' इति ।

देवव्रतः चषकेण जलम् आनीय मातुः हस्ते दातुम् उद्युक्तः । तदा चषकः हस्तात् शय्यायाम् अपतत् । शय्या-वस्त्रम् आर्द्रम् जातम् । देवव्रतः पुनः जलम् आनीय दत्तवान् । पुनः मातुः हस्तात् चषकः पतितः ।

एवं द्वित्रवारं तस्याः हस्तात् चषकः पतितः । सम्पूर्णं शय्यावस्त्रं जलेन आर्द्रम् अभवत् । खिन्नः भूत्वा देवदत्तः उक्तवान् – ''अम्ब ! भवत्याः कारणतः सम्पूर्णं शय्यावस्त्रम् आर्द्रम् अभवत् । अधुना अहम् अत्र निद्रां कर्तुं न शक्नोमि । अहं स्वशय्यायां निद्रां करोमि'' इति ।

तदा माता उक्तवती – ''वत्स ! यदा भवान् शिशुः आसीत् तदा पुनः पुनः शय्यावस्त्रम् आर्द्रं करोति स्म । यदा सम्पूर्णं शय्यावस्त्रं आर्द्रं भवति स्म तदा अहं भवन्तम् अङ्के शाययित्वा स्वयम् आर्द्रे शय्यावस्त्रे शयनं करोमि स्म'' इति ।

मातुः एतत् वचनं श्रुतवतः देवव्रतस्य नेत्रे उद्घाटिते । 'अहं सर्वस्मात् ऋणात् मुक्तः भवितुं शक्नोमि, किन्तु मातृ-ऋणात् मुक्तः भवितुं न शक्नोमि' इति सः ज्ञातवान् । मातुः क्षमां च प्रार्थितवान् ।

❑❑

# ९. धर्मपालस्य बुद्धिमत्ता

• *(सं) पी.के. नारायणन् नम्ब्यार्*

कस्मिंश्चित् राज्ये धर्मपालः नाम महाराजः आसीत् । सः कदाचित् राज्ये सञ्चारं कुर्वन् आसीत् । एवं गमनसमये सः मार्गमध्ये परस्परं कलहं कुर्वन्तौ द्वौ वृद्धौ दृष्टवान् । तयोः रूपं समानम् आसीत् । तत् दृष्ट्वा विस्मितः सः तौ स्वसमीपम् आनेतुं सैनिकान् आज्ञापितवान् ।

सैनिकाः गत्वा तौ आनीतवन्तः । महाराजः तौ उद्दिश्य प्रश्नं कृतवान् – ''भोः, किमर्थं भवतोः मध्ये एवं कलहः प्रचलति ?'' इति ।

तदा तयोः एकतरः उक्तवान् – ''महाराज ! अहम् अग्निशर्मा नाम ब्राह्मणः । सुदूरात् नगरात् अहं पत्नीपुत्राभ्यां सह एतेन मार्गेण स्वग्रामं प्रति गच्छन् आसम् । अत्र स्थितं सरोवरं दृष्ट्वा वयं किञ्चित्कालं स्थितवन्तः । मम पत्नी पुत्रेण सह जलं पातुं सरोवरं गतवती । तदा एषः पुरुषः कुतश्चित् आगतवान् ।

एषः वदति यत् 'अहमेव अग्निशर्मा । एषा मम पत्नी' इति । अतः कलहः आरब्धः'' इति ।

तदा महाराजः तस्य स्थलस्य विशेषं स्मृतवान् यत् 'तत्र कश्चन ब्रह्मराक्षसः निवसति । सः सर्वान् अपि वञ्चयति' इति । अतः सः निश्चितवान् यत् 'ब्रह्मराक्षसः एव ब्राह्मणस्य वेषं धृत्वा आगतवान् अस्ति । अतः एतयोः एकतरः वास्तविकः ब्राह्मणः, अपरः कपटवेषधरः ब्राह्मणः । कथमपि उपायेन तयोः मध्ये वास्तविकः ब्राह्मणः कतरः इति ज्ञातव्यम्' इति ।

अतः सः ब्राह्मणस्य पुत्रम् आहूय 'एतयोः कतरः भवतः पिता इति वदतु' इति सूचितवान् । बालकः पुनः पुनः तौ दृष्टवान् । परन्तु वर्ण-रूप-आकारादिषु तौ समानौ आस्ताम् । तयोः मध्ये किञ्चिदपि भेदः एव न आसीत् । अतः सः बालः तयोः मध्ये स्वपिता कः इति अभिज्ञातुं न शक्तवान् ।

तदा महाराजः ब्राह्मणस्य पत्नीं स्वसमीपम् आहूतवान् । रहसि तां पृष्टवान् च यत् – ''भवत्याः पत्युः शरीरे किमपि विशिष्टम् अभिज्ञानम् अस्ति किम् ?'' इति । तदा सा उक्तवती – ''तस्य शिरसि एका सूक्ष्मा शिखा अस्ति'' इति ।

ततः महाराजः वृद्धद्वयम् अपि स्वसमीपम् आहूतवान् । युगपत् द्वयोः अपि उष्णीषं निष्कासितवान् । तदा एकतरस्य शिरसि सः सूक्ष्मां शिखां दृष्टवान् । अन्यस्य शिरसि तु शिखा न आसीत् । अतः तयोः वास्तविकः अग्निशर्मा कतरः इति महाराजः ज्ञातवान् ।

तथापि महाराजः किमपि न ज्ञातमिव स्थितवान् । अनन्तरं च 'उपायेन ब्रह्मराक्षसः निवारणीयः' इति चिन्तितवान् । अतः सः सैनिकान् आज्ञाप्य एकां बृहत्पेटिकां तत्र आनायितवान् । ततः तौ वृद्धौ उक्तवान् – ''अहम् एकां परीक्षां करोमि । तदा भवतोः मध्ये वास्तविकः अग्निशर्मा कः इति ज्ञायते'' इति ।

''का परीक्षा ?'' इति तौ पृष्टवन्तौ ।

''भवतोः एकैकः अपि एतां पेटिकां प्रविश्य बहिः आगच्छतु । सा एव परीक्षा'' इति महाराजः उक्तवान् ।

तौ द्वौ अपि अङ्गीकृतवन्तौ । प्रथमं शिखाधारी वृद्धः पेटिकां प्रविश्य बहिः आगतवान् । अनन्तरं द्वितीयः वृद्धः यदा पेटिकां प्रविष्टवान् तदा महाराजः झटिति तस्याः द्वारबन्धनं कृतवान् । तालेन कीलनम् अपि कृतवान् । ततः तस्य आज्ञानुसारं सेवकाः तां पेटिकां नद्यां क्षिप्तवन्तः ।

एवं महाराजः उपायेन ब्रह्मराक्षसं निवार्य अग्निशर्मणः कष्टं दूरीकृतवान् । अग्निशर्मा अपि महाराजस्य बुद्धिमत्तां पुनः पुनः प्रशंसन् पत्नीपुत्राभ्यां सह स्वग्रामं गतवान् ।

□□

# १०. पैशुनस्य फलम्

• *(सं) साधु विश्ववल्लभदासः*

कस्मिंश्चित् अरण्ये बहुविधाः मृगाः वसन्ति स्म । तेषां सर्वेषां महाराजः सिंहः आसीत् । एकदा सिंहः केनापि रोगेण पीडितः अभवत् । तस्य रोगस्य विषयं ज्ञात्वा सर्वेऽपि मृगाः तं द्रष्टुम् आगतवन्तः । परन्तु एकः शृगालः तु न आगतवान् एव । रोगपीडितम् आत्मानं द्रष्टुम् सर्वेऽपि मृगाः आगतवन्तः उत न इति सिंहः न जानाति स्म ।

तदा एकः उष्ट्रः सिंहम् उक्तवान् - ''भोः महाराज ! भवतः अनारोग्यं ज्ञात्वा सर्वेऽपि मृगाः भवन्तं द्रष्टुम् आगतवन्तः । किन्तु अहङ्कारी शृगालः तु न आगतवान् एव'' इति । तत् श्रुतवतः सिंहस्य महान् कोपः आगतः ।

अनन्तरदिने शृगालः अन्येषां द्वारा ज्ञातवान् यद् 'उष्ट्रः सिंहस्य पुरतः मम विषये पैशुनं कृतवान् अस्ति' इति । अतः सः शीघ्रं सिंहस्य दर्शनार्थं गतवान् । दूराद् एव भक्त्या तं नमस्कृतवान् च ।

शृगालं दृष्ट्वा सिंहः कुपितः सन् उच्चस्वरेण – ''रे मूर्ख ! किमर्थं भवान् एतावत्पर्यन्तं मां द्रष्टुं न आगतवान् ?'' इति गर्जितवान् ।

शृगालः विनयम् अभिनयन् उक्तवान् – ''महाराज ! क्षन्तव्यः अहम् । भवतः अस्वास्थ्यवार्तां ज्ञात्वा 'तस्य औषधं स्वीकृत्य एव आगच्छामि' इति चिन्तयित्वा अहं वैद्यस्य समीपं गतवान् आसम् । अतः मम आगमने विलम्बः जातः'' इति ।

सन्तुष्टः सिंहः शान्तस्वरेण – ''भोः मित्र ! एवं वा ! वैद्यः मन्निमित्तं किमपि औषधं दत्तवान् वा ?'' इति पृष्टवान् ।

शृगालः उक्तवान् – ''महाराज ! वैद्यः किमपि औषधं तु न दत्तवान् । किन्तु सः चिकित्साक्रमम् उक्तवान् अस्ति । भवान् यदि उष्ट्रस्य रक्तं पिबति तर्हि शीघ्रमेव रोगस्य उपशमनम् अवश्यं भवति'' इति ।

सिंहः उष्ट्रम् आहूतवान् । उष्ट्रः भक्त्या आगतवान् । सिंहः तु तदुपरि उत्पत्य तं मारयित्वा तस्य रक्तं पीतवान् ।

उष्ट्रः स्वस्य पिशुनत्वात् स्वयमेव मरणं प्राप्तवान् ।

□□

# ११. परेषां दुःखं स्वदुःखम्

• *विजयलक्ष्मीः सारस्वतः*

कस्मिंश्चित् ग्रामे काचित् वृद्धा निवसति स्म । तस्याः एकः एव पुत्रः । माता पुत्रः च अतीव दयापरौ । तयोः गृहम् अत्यन्तं लघु आसीत् ।

कदाचित् वृद्धा रुग्णा जाता । सा औषधनिर्माणार्थं लोध्रवृक्षस्य त्वचम् इष्टवती । अतः पुत्रम् उक्तवती – ''पुत्र ! वने लोध्रवृक्षः अस्ति, भवान् तत्र गत्वा किञ्चित् त्वचम् आनयतु'' इति ।

पुत्रः परशुं गृहीत्वा वनं गतवान् । लोध्रवृक्षं दृष्टवान् । परशुना तस्य त्वचं निष्कास्य गृहं प्रति आनीतवान् । वृद्धा तत् स्वीकृत्य औषधं सज्जीकृतवती । तस्य सेवनेन सा स्वस्था अपि जाता ।

पुनः कदाचित् माता पुत्रस्य श्वेतवस्त्रं रक्तरञ्जितं दृष्टवती । आतङ्केन सा पुत्रं पृष्टवती – ''वत्स ! भवतः श्वेतवस्त्रं कथं रक्तरञ्जितम् अस्ति ? किम् अभवत् ?'' इति ।

पुत्रः किमपि न उक्तवान् । माता पुनरपि सानुरोधं पृष्टवती – ''वत्स ! किम् अभवत् ? वदतु'' इति ।

तदा पुत्रः उक्तवान् – ''अम्ब ! तस्मिन् दिने भवती मां लोध्रवृक्षस्य त्वचम् आनेतुम् उक्तवती आसीत्, तस्य वृक्षस्य छेदनसमये मम मनसि विचारः उत्पन्नः यत् 'त्वक्निष्कासनसमये सः वृक्षः कियतीं वेदनाम् अनुभूतवान् स्यात् ! यद्यपि सः वृक्षः वक्तुं न शक्नोति, तथापि तस्य वेदना स्यात् एव' इति । अद्य अहं निश्चितवान् यत् 'तस्मिन् समये वृक्षस्य कीदृशी वेदना जाता स्यात् इति मया ज्ञातव्यम् इति ।' अतः एव मम शरीरस्य किञ्चित् चर्म अहमेव निष्कासितवान् । ततः रक्तप्रवाहः भवति । तेन मम श्वेतवस्त्रं रक्तरञ्जितम् अस्ति'' इति ।

पुत्रस्य वचनं श्रुतवत्याः मातुः नेत्राभ्याम् अश्रुप्रवाहः आरब्धः । पुत्रस्य दयागुणं ज्ञात्वा अतीव प्रसन्ना सा तं गाढम् आलिङ्गितवती ।

□□

# १२. प्रकृतेः नियमः

• वसुधेन्द्र एस्.

विजयनगरसाम्राज्ये नरहरिः नाम कश्चित् ग्रामीणः निवसति स्म । सः वनं गत्वा बहुकालं यावत् तपः कृतवान् । तपसा सन्तुष्टः देव नरहरेः पुरतः प्रत्यक्षः अभवत् । सः नरहरिम् उद्दिश्य – ''भक्त ! अहं भवतः तपसा सन्तुष्टः अस्मि । एतानि त्रीणि फलानि स्वीकरोतु । भवान् फलं खादन् मनसि यत् चिन्तयति तत् सिद्धं भविष्यति । शुभं भवतु'' इति उक्त्वा त्रीणि फलानि दत्त्वा अदृश्यः अभवत् । नरहरिः सन्तोषेण फलानि स्वीकृत्य गृहम् आगतवान् ।

गृहस्य पुरतः द्वारे एव स्थित्वा नरहरेः पत्नी क्षीरविक्रेत्र्या सह कलहं कुर्वती आसीत् । अतः नरहरिः गृहस्य पुरतः जायमानं कोलाहलं दृष्ट्वा 'जगति जलम् अस्ति इति कारणात् एव एषा अस्मान्

वञ्चयति । अतः 'जगति विद्यामानं जलं सर्वं क्षीरं भवतु' इति मनसि एव चिन्तयन् एकं फलं खादितवान् । नरहरिः यदा फलं खादितवान् तस्मिन् एव क्षणे जगति सर्वत्र परिवर्तनम् आरब्धम् । नदी, समुद्रः, कूपः – इत्यादीनां जलं सर्वं क्षीरमयम् अभवत् । देवालये देवाय समर्पिते नारिकेले अपि जलस्य स्थाने क्षीरम् एव आसीत् । जनाः रोदनं कुर्वन्ति चेत् अपि नेत्राभ्याम् अश्रूणां स्थाने क्षीरम् एव आगच्छति । तस्मिन् एव दिने वृष्टिः आगता । किन्तु जलबिन्दूनां स्थाने क्षीरबिन्दवः एव पतिताः । सस्यं, लता, वृक्षः – इत्यादीनां पर्णानाम् उपरि क्षीरबिन्दवः एव तुषारः इव स्थिताः आसन् । जनाः यथेष्टं क्षीरं पीतवन्तः । क्षीरेण पायसम् अपि कृत्वा खादितवन्तः । सन्तुष्टाः ते नरहरिं बहुधा श्लाघितवन्तः ।

प्रातःकालः जातः । जनाः मुखं प्रक्षालयितुं गतवन्तः । किन्तु ते 'जलं सर्वं क्षीररूपेण परिवर्तितम् अस्ति' इति स्मृतवन्तः । क्षीरेणैव ते मुखप्रक्षालनं, स्नानं च कृतवन्तः । किन्तु ततः शुद्धिः तु न जाता, प्रत्युत मालिन्यं प्रवृद्धम् । भूमौ पादः स्थापितः चेत् क्षीरकारणतः स्खलनं भवति स्म । मार्गे गमनागमनम् एव क्लेशकरम् आसीत् । गृहिणीनां परिस्थितिः तु शोचनीया आसीत् । भोजनसमये तु क्षीरस्य पानं कस्यापि तृप्तये न अभवत् । सायङ्कालसमये ते सर्वे जनाः वातावरणस्य वैपरीत्यं ज्ञातवन्तः । नरहरेः कारणात् एव एषा समस्या उद्भूता अस्ति इति चिन्तयित्वा सर्वे अपि नरहरेः गृहम् आगतवन्तः । 'सर्वत्र जलं यथा भवेत् तथा करोतु कृपया' इति तं प्रार्थितवन्तः ।

नरहरिः जनानां समस्यां ज्ञात्वा 'जगति जलस्य आवश्यकता एव अत्यधिका अस्ति' इति मत्वा पुनः एकवारं 'जगति विद्यमानं क्षीरं सर्वं जलमयं भवतु' इति वदन् द्वितीयं फलं खादितवान् । सर्वे जनाः सन्तोषेण गृहं गतवन्तः । आतृप्ति जलं पीतवन्तः । गृहस्य स्वच्छतां कृतवन्तः । आकाशात् पुनः वृष्टिः अपि पतिता ।

किन्तु पुनः अन्या समस्या उद्भूता । लघुशिशवः बालाः च क्षीरार्थं रोदनम् आरब्धवन्तः । सर्वत्रापि क्षीरस्य स्थाने जलम् एव दृश्यते स्म । धेनोः ऊधसः अपि जलम् एव आगतम् । जनाः पुनः वैपरीत्यम् अवगतवन्तः । पुनः सर्वेऽपि नरहरेः गृहं गत्वा तं प्रार्थितवन्तः यत् 'कथञ्चित् प्रकृतेः वैपरीत्यं सम्यक् करोतु' इति । 'यदि भवान् परिवर्तनं न करोति तर्हि भवन्तं मारयामः' इति नरहरिं भायितवन्तः अपि ।

जनानां कोपं दृष्ट्वा नरहरिः भीतः । स्वस्य कारणतः जातायाः दुरवस्थायाः परिणामः अपि तेन अवगतः । अतः सः जगति जलक्षीरयोः स्थितिः पूर्ववत् एव भवतु' इति चिन्तयन् तृतीयं फलं खादितवान् । जगत् पूर्ववत् अभवत् । जनाः सन्तोषेण गृहं गतवन्तः ।

□□

# १३. श्रेष्ठता गुणेन, न जन्मना

• *(सं) कोक्कड वेङ्कटरमणभट्टः*

महर्षेः कण्वस्य त्रयः पुत्राः आसन् - विशोकः, नाभागः, वेदातिथिश्चेति । विशोकः नाभागः च असुरकन्यायां जातौ । वेदातिथिः तु न तथा ।

वेदातिथिः चिन्तयति स्म - 'अहं सद्वंशजातः । मम माता उच्चकुलीया । अतः अहम् एव श्रेष्ठः । अहम् एव गरीयान् । तौ उभौ अपि असुरपुत्रौ । अतः एव अधमौ' इति । एवं चिन्तयतः तस्य दुरभिमानः प्रवृद्धः । आकण्ठं भोजनं, व्यर्थतया अटनं च तस्य कार्यम् आसीत् । 'वाममार्गम् आश्रित्य वा येनकेनचित् क्रमेण मया प्रसिद्धपुरुषेण भवितव्यम्' इति सः चिन्तयति स्म ।

एवम् एव दिनानि गतानि । त्रयः अपि सहोदराः प्रौढाः जाताः । एकदा वेदातिथिः विना कारणं विशोकेन सह कलहार्थं प्रवृत्तः । सः विशोकं निन्दितवान् - "भवान् नीचकुलजातायाः पुत्रः । अतः एव अधमः । भवतः न कापि योग्यता । तथापि भवान् आत्मानं श्रेष्ठं मन्यते" इति ।

एतत् श्रुत्वा अपि विशोकः उद्विग्नः न जातः । सः शान्तस्वरेण उक्तवान् - "अग्रज ! 'अहम् एव श्रेष्ठः' इति भावः मयि किञ्चिदपि नास्ति । तत्रापि अग्रजस्य पुरतः मया किमर्थं वा श्रेष्ठता प्रदर्श्येत ? भवान् मत्तः ज्येष्ठः । अनुजस्य मम एवं निन्दनम् उचितं न खलु ?" इति ।

"हुम् । नीचकुलजायाः पुत्रं

भवन्तं सहोदरं भावयितुं लज्जाम् अनुभवामि अहम् । अतः 'अग्रज !' इति मां न सम्बोधयतु भवान्'' इति गर्वेण उक्तवान् वेदातिथिः ।

''अग्रज ! अस्माकं पिता अभिन्नः । एवं स्थिते आवयोः सहोदरत्वं कुतो वा न स्यात् ? मम तु भाति - भवतः चिन्तनम् अयुक्तम् इति । कृपया भवान् स्वचिन्तनं व्यवहारं च परिष्करोतु । अन्यथा कुलस्य अपकीर्तिः भवेत् । मातापित्रोः महती व्यथा स्यात्'' इति विनयेन उक्तवान् विशोकः ।

''किं माम् एव उपदिशति भवान् ! धिक् भवन्तम् । एषोऽहं भवतः जिह्वां विदारयिष्यामि...'' इति कोपेन गर्जितवान् वेदातिथिः ।

तथापि विशोकः शान्ततया मौनेन स्थितवान् आसीत् । तस्य मौनम् असहमानः वेदातिथिः पुनः उक्तवान् - ''किमर्थं पाषाणखण्डः इव मौनेन तिष्ठति भवान् ? अथवा नीचकुलजायाः पुत्राः अन्यथा कथं वा व्यवहरेयुः ? न वेदाधिकारः भवतां, न कापि विशिष्टयोग्यता वा । भवतः मुखस्य दर्शनम् अपि अमङ्गलकरम् । अतः इतः निर्गच्छतु तावत्'' इति ।

एतस्मात् नितरां खिन्नः विशोकः उक्तवान् - ''किं व्यर्थजल्पनेन ? 'अहम् एव श्रेष्ठः' इति भवान् चिन्तयति । मम न कापि योग्यता इत्यस्ति भवतः भावः । अतः 'कः श्रेष्ठः' इत्येतत् प्रमाणितं भवतु इदानीम् एव । अत्रैव अग्निवेदिकां रचयाव । तदुपरि उभावपि सञ्चराव । यस्य पादः अग्निस्पर्शेन दग्धः न भवति सः एव श्रेष्ठः इति अङ्गीकरवाव'' इति ।

वेदातिथिः एतत् अङ्गीकृतवान् । ततः अग्निवेदिका सिद्धा । आदौ विशोकः एव अग्नि-वेदिकायाः उपरि सञ्चारं कृतवान् । तेन अणुमात्रेण अपि पीडा न प्राप्ता । ततः वेदातिथिः अग्निवेदिकायां पादौ स्थापितवान् । तस्य पादौ क्षणमात्रेण दग्धौ । आक्रोशनं कुर्वन् सः ततः बहिः आगत्य विशोकं बहुधा निन्दित्वा - ''भवान् उच्चकुलीयः न । अतः एव अग्निः भवतः स्पर्शं कर्तुं न इष्टवान् । अग्नेः जुगुप्साकारणतः एव भवान् रक्षितः अभवत्'' इति उक्तवान् ।

अनन्तरं वेदातिथेः अपेक्षायाः अनुगुणं जलस्य उपरि सञ्चारस्य परीक्षा प्रवृत्ता । अत्रापि वेदातिथिः एव पराजयं प्राप्तवान् ।

तृतीया स्पर्धा एवं निर्णीता - 'यः अधिकाः गाः स्वसमीपम् आक्रष्टुम् अर्हति सः एव श्रेष्ठः' इति ।

आदौ वेदातिथिः प्रयत्नं कृतवान् । विविधशब्दैः सः गाः आहूतवान् । एका अपि गौः तत्समीपं न आगता । अनन्तरं विशोकः मधुरस्वरेण सस्वरं सामगानं कृतवान् । ततः प्रीताः गावः समूहरूपेण तत्समीपम् आगताः ।

एतत् दृष्ट्वा वेदातिथिः लज्जितः अभवत् । यः विद्यया गुणेन च उत्तमः भवति सः एव श्रेष्ठः । जन्मना कोऽपि श्रेष्ठः न भवति' इति सः अवगतवान् ।

□□

# १४. शिरःकम्पनात् समस्या

• रूपा. वी

पुरातनकाले सर्पाणां कर्णः भवति स्म । तेषां श्रवणशक्तिः अपि आसीत् । एकदा भगवान् विष्णुः सर्पराजस्य अनन्तनागस्य उपरि शयनं कुर्वन् आसीत् । तदा महर्षिः नारदः भगवतः विष्णोः स्तुतिं कुर्वन् तत्र आगतः । भगवतः विष्णोः स्तुतिं श्रुत्वा भक्तस्य अनन्तस्य मनः प्रसन्नम् अभवत् । प्रसन्नताकारणतः अनन्तः सर्वं विस्मृत्य आत्मनः शिरः कम्पितवान् । अनन्तस्य शिरःकम्पनेन सम्पूर्णा पृथिवी कम्पमाना जाता । एतस्मात् कारणात् भीता भूदेवी भगवतः विष्णोः समीपम् आगतवती ।

तं नमस्कृत्य भूदेवी उक्तवती – ''भगवन् ! सर्पराजस्य अनन्तस्य उपरि एव भवान् शयनं करोति । अहम् अपि एतस्य शिरसि एव उपविष्टा अस्मि । भवतः दर्शनाय महर्षिः नारदः यदा आगच्छति तदा भवतः स्तुतिं श्रुत्वा एषः अनन्तः आनन्दमग्नः भूत्वा शिरः कम्पयति । यदि अनन्तः एतादृशं शिरःकम्पनं निरन्तरं करोति तर्हि भूतले स्थितानां जनानां महत् कष्टं भविष्यति । एतस्याः समस्यायाः समाधानं भवान् एव कर्तुं शक्नोति'' इति ।

एतत् श्रुत्वा विष्णुः सर्पराजम् अनन्तं पृष्टवान् – ''किं भोः अनन्त ! एतत् सर्वं सत्यं किल ?'' इति ।

''भगवन् ! इदं सत्यमेव । किन्तु मया एतत् सर्वम् अज्ञात्वा क्रियते । भवतः स्तुतिं श्रुत्वा अहम् आनन्दमग्नः भवामि । तस्मिन् क्षणे मया किं क्रियते इति तु न ज्ञायते एव'' इति अनन्तः भगवन्तं विष्णुम् उक्तवान् ।

सर्वं ज्ञात्वा विष्णुः चिन्तामग्नः जातः – 'किं करणीयम्' इति । 'मम स्तुतिं न करोतु इति नारदं वक्तुं न शक्नोमि । यतः मम नाम्नः जपं विना सः क्षणम् अपि जीवितुं न शक्नोति' इति सः चिन्तितवान् ।

अन्ते सः नारदम् एव आहूय स्वसमस्याम् उक्तवान् । द्वौ अपि मिलित्वा निर्णीतवन्तौ यत् अनन्तस्य श्रवणशक्तिः नाशनीया इति । अनन्तः यदा एतं विषयं ज्ञातवान् तदा सः विष्णुम् उक्तवान् – ''अहं भवतः नाम अश्रुत्वा एकं निमेषम् अपि जीवितुं न शक्नोमि'' इति ।

अन्ते देवी लक्ष्मीः अनन्तस्य सान्त्वनम् एवं कृतवती – ''इतःपरं भूलोके विष्णुस्तुतिः अधिका भविष्यति । तदा भूमौ किञ्चित् चलनं दृश्यते तदा भवान् विष्णुस्तुतेः अनुभवं स्पर्शज्ञानद्वारा ज्ञातुं शक्नोति । यत् कर्णेन भवता ज्ञायते स्म तत् इतःपरं स्पर्शद्वारा ज्ञातुं भवतः सामर्थ्यं भविष्यति'' इति ।

एतत् अनन्तः अङ्गीकृतवान् । अतः एव इदानीं सर्पणां कर्णः न भवति ।

□□

# १५. न सेवितो येन क्षणं मुकुन्दः...

• **डा॰ हरिपाल द्विवेदी**

महर्षिः शुकः महान् तपस्वी । सः प्रापञ्चिकेभ्यः विषयेभ्यः विमुखः सन् तपः आचरति स्म । देवलोकस्य अप्सराः रम्भा शुकमहर्षेः तपोभङ्गं कर्तुम् इष्टवती । अतः सा तस्य समीपम् आगत्य स्वीयविलासभावादिभिः तस्य मनः आक्रष्टुं बहु प्रयत्नं कृतवती । परन्तु तस्याः अद्वितीयं सौन्दर्यं दृष्ट्वा अपि शुकः विचलितः न अभवत् ।

रम्भा पुनरपि प्रयत्नम् अनुवर्तितवती । तदा शुकदेवः तां पृष्टवान् - "देवि ! भवती किमर्थं मम मनः आक्रष्टुं प्रयत्नं करोति ?" इति ।

रम्भा उक्तवती - "अहं भवतः तादृशं रसपानं कारयितुम् इच्छामि यत् भवता जीवने कदापि न कृतम्" इति ।

शुकदेवः उक्तवान् - "परं देवि ! अहं तु अद्भुतस्य कस्यचित् रसस्य पानं प्रतिक्षणं कुर्वन् अस्मि । यदि तस्मात् रसपानात् क्षणमपि वञ्चितः भवामि तर्हि जीवनमेव व्यर्थं भवति । अर्थात् -

*न सेवितो येन क्षणं मुकुन्दः वृथा गतं तस्य नरस्य जीवनम् ।*

भगवतः सेवनं विना क्षणमपि मनुष्यः यदि तिष्ठति तर्हि तस्य जीवनमेव निरर्थकं भवति । अतः देवि ! अहं तु मुकुन्दपदसेवनरूपं रसपानं क्षणमपि त्यक्त्वा स्वजीवनं निरर्थकं कर्तुं न इच्छामि । तद्विना अन्यैः विषयैः मम किम् ?" इति ।

तथापि रम्भा निराशा न अभवत् । सा पुनरपि स्वकीयं सौन्दर्यं वर्णयितुम् आरब्धवती । सा उक्तवती यत् - "महिला अपि भगवता एव सृष्टा । अतः महिला न उपेक्षणीया । अन्यच्च भवान् न जानाति यत् नारीशरीरं तादृशं सुगन्धपूर्णं भवति, यत् यदि कश्चित् तत् सुखं न अनुभवति तर्हि तस्य जीवनमेव व्यर्थं भवति" इति ।

तदा शुकदेवः विनयेन उक्तवान् - "देवि ! भवत्याः कृपया इदंप्रथमतया मया ज्ञातं यत् नारीशरीरं तादृशं सुगन्धपूर्णं भवति इति । भवतु । यदि भगवत्प्रेरणया पुनरपि मम मनुष्यजन्म भवेत् तर्हि एतदेव इच्छामि यत् भवादृश्याः पूज्यायाः मातुः गर्भे नवमासपर्यन्तम् उषित्वा तत् सुखम् अनुभविष्यामि । इदानीं तु मया भगवतः सेवा एव करणीया अस्ति । भवती मां क्षाम्यतु" इति ।

परमज्ञानिना शुकदेवेन नारीशरीरस्य निन्दनम् अपि न कृतम्, स्वनिष्ठातः विचलनम् अपि न कृतम् । तेन विस्मिता रम्भा स्वकीयं प्रयत्नं परित्यज्य प्रतिगतवती ।

□□

# १६. दृष्टिभेदः

• *(सं) तरुणा सिंहः*

पूर्वं मगधराज्यं चित्रसेनः महाराजः पालयति स्म । तस्य पुत्रस्य नाम कीर्तिसेनः । महाराजः पुत्रं बाल्ये एव अध्ययनार्थं गुरुकुलं प्रेषितवान् । गुरुकुले आरुणिः नाम कश्चन कीर्तिसेनस्य मित्रम् अभवत् । यद्यपि कीर्तिसेनः स्वभावेन अहङ्कारी, आरुणिः तु परमसज्जनः, तथापि तयोः महती मित्रता आसीत् ।

गच्छता कालेन तौ द्वौ अपि युवकौ जातौ । तयोः अध्ययनम् अपि समाप्तम् । कीर्तिसेनः स्वराज्यं प्रत्यागत्य राज्यपालने मग्नः अभवत् । आरुणिः तु ऋषिपुत्रः । सः अरण्ये आश्रमे स्थित्वा दीनानां, पशुपक्षिणां च सेवायां जीवनं यापयति स्म । अध्यापनकार्यं तु तस्य आसीत् एव ।

एकदा कीर्तिसेनः मृगयार्थं वनम् आगतवान् । मृगयायाम् एव महान् समयः अतीतः । रात्रिः अभवत्। वने अटन् सः कस्यचित् आश्रमस्य समीपम् आगतवान् । तं दृष्ट्वा सन्तुष्टः आश्रमपालकः तम् आश्रमस्य अन्तः नीत्वा, प्रीत्या तस्य सत्कारं कृतवान् । अतीव आदरेण तस्य शयनव्यवस्थाम् अपि कृतवान् ।

प्रातःकालः सञ्जातः । स्वस्य निमित्तम् आश्रमपालकेन कृतम् आतिथ्यं दृष्ट्वा महाराजः सन्तुष्टः जातः । सः तम् उक्तवान् - ''हे महात्मन् ! यद्यपि मम भवतः परिचयः नास्ति, तथापि भवान् मह्यम् आश्रयं दत्तवान् । उत्तमम् आतिथ्यम् अपि कृतवान् । अहं कदापि भवतः सत्कारं न विस्मरामि'' इति ।

तदा आश्रमपालकः हसन् उक्तवान् - ''भोः मगधनरेश ! भवान् मम आतिथ्यं न विस्मरिष्यति इति अहमपि जानामि । वस्तुतः अहं भवतः आतिथ्यं न कृतवान् । किन्तु किञ्चित्कालं यावत् मम मित्रेण सह सानन्दं समयं यापितवान्, तावदेव'' इति ।

कीर्तिसेनः महता आश्चर्येण तं पश्यन् स्थितवान् । तस्य आश्चर्यचकितं मुखं पश्यन् आश्रमपालकः

उक्तवान् – ''भोः मित्र ! मां विस्मृतवान् किम् ?'' इति ।

तदा कीर्तिसेनः ज्ञातवान् यत् 'एषः मम प्राणस्नेहितः आरुणिः' इति । सन्तुष्टः सः तस्मिन् आश्रमे इतोऽपि एकं दिनं स्थितवान् ।

परेद्यवि महाराजः राजधानीं प्रति प्रस्थितवान् । गमनसमये सः आरुणिम् – ''भवान् अपि राजधानीम् आगच्छतु'' इति सानुरोधम् उक्तवान् । तत् निराकुर्वन् आरुणिः उक्तवान् – ''मित्र ! अहम् अरण्ये आश्रमजीवने एव सुखेन तिष्ठामि । भवान् प्रतिनिवर्तताम् । यदा मां द्रष्टुम् इच्छति तदा अत्र आगच्छतु'' इति ।

परन्तु कीर्तिसेनः तत् न अङ्गीकृतवान् । बलात् तं राजधानीं प्रति नीतवान् एव । आरुणिः गमनसमये चिन्तितवान् – 'एषः हठवादी, अहङ्कारी अपि अस्ति । एतं शिक्षितुम् एषः अवसरः लब्धः । उचिते काले सुवचनैः एतस्य अहङ्कारं हठं च निवारयामि' इति ।

गमनानन्तरं महाराजः तस्मै सन्तोषेण प्रीत्या च स्वराज्यस्य अर्धभागं दत्तवान् ।

राजधानीम् आगतवतः आरुणेः षण्मासाः अतीताः । कदाचित् महाराजः कीर्तिसेनः तेन सह भोजनं कुर्वन् आसीत् । तदा सः अभिमानेन आरुणिम् उक्तवान् – ''भोः मित्र ! स्मरतु । पूर्वं भवान् वने वसति स्म । कन्दमूलादिकम् एव भवतः आहारः आसीत् । मम सहवासेन भवता एतत् सर्वं सुखं प्राप्तम् अस्ति । सम्प्रति आवयोः मध्ये न कोऽपि भेदः । सत्यं खलु ?'' इति ।

स्मितवदनः आरुणिः उक्तवान् – ''महाराज ! भवता उक्तं सत्यम् एव । भवान् मम बहु साहाय्यं कृतवान् । परन्तु आवयोः मध्ये भेदः नास्ति इति मा चिन्तयतु ।''

तत् श्रुत्वा कीर्तिसेनः आश्चर्येण उक्तवान् – ''मित्र ! आवयोर्मध्ये कः भेदः ? अहं तु भवते अर्धराज्यं दत्तवान् । मम समीपे यावत् वित्तम् अस्ति तावदेव भवतः समीपे अपि अस्ति । तत्र नास्ति सन्देहः'' इति ।

तस्य वचनं श्रुत्वा आरुणिः तूष्णीं भवनस्य अन्तः गतवान् । स्वस्य पूर्वतनम् आश्रमवस्त्रं धृत्वा, कमण्डलुं गृहीत्वा बहिः आगतवान् । महाराजम् उक्तवान् च – ''हे राजन् ! मया सह आगच्छतु भवान् वनं प्रति । एतस्मिन् जगति सांसारिकपदार्थेषु किम् अस्ति ? आवां वनं गत्वा आश्रमे निवसन्तौ आत्मानन्दं प्राप्स्यावः'' इति ।

कीर्तिसेनः उक्तवान् – ''तत् कथं शक्यते ? किञ्चित्कालपूर्वमेव मम विवाहः अभवत् । अधुना मम पुत्रः जातः । सः लघुः शिशुः अपि । सः राज्यपालनं कर्तुं न शक्नोति । अतः अहं राज्यं त्यक्त्वा कथं वा भवता सह आगन्तुं शक्नुयाम् ?'' इति ।

कीर्तिसेनस्य वचनं श्रुत्वा आरुणिः – ''हे राजन् ! अहं प्रस्थितः अस्मि । यथा भवता राज्यं त्यक्तुं न शक्यते तथा मया राज्ये स्थातुं न शक्यते । आवयोः मध्ये एषः एव भेदः अस्ति । भवतः सुखभोगेषु आसक्तिः अस्ति । मम न तथा । प्रथमं त्यागस्य महत्त्वम् भवान् अवगच्छतु'' इत्युक्त्वा ततः निर्गतवान् ।

□□

# १७. ज्ञातव्यः लोकव्यवहारः

• *(सं) डा॰ गोपालनारायण शर्मा*

कस्मिंश्चित् ग्रामे कश्चन ब्राह्मणकुमारः निवसति स्म । तस्य नाम ऐश्वर्यः । पितुः आज्ञानुसारम् ऐश्वर्यः अध्ययनार्थं नगरं गतवान् । तत्र सः परिश्रमेण अध्ययनं कृतवान् ।

गच्छता कालेन ऐश्वर्यः महान् पण्डितः जातः । व्याकरणे साहित्ये च तस्य महत् पाण्डित्यम् आसीत् । यदा सः ग्रामं प्रत्यागतवान् तदा सर्वे जनाः तम् आदरेण पश्यन्ति स्म । यतः तस्मिन् ग्रामे तादृशविद्यावान् अन्यः न आसीत् । एतस्मात् कारणात् ऐश्वर्यः अतिगर्वितः अभवत् ।

एकदा तस्मिन् ग्रामे एका वरयात्रा प्रचलन्ती आसीत् । वरयात्रायां चत्वारः पण्डिताः अपि आसन् । तस्मिन् ग्रामे काचित् परम्परा आसीत् यत् विवाहसन्दर्भे शास्त्रगोष्ठी प्रचलति स्म । यदा सर्वे विवाहमण्डपम् आगतवन्तः तदनन्तरं शुभमुहूर्ते शास्त्रगोष्ठ्याः आरम्भः जातः ।

अनाहूतः अपि ऐश्वर्यः तत्र गत्वा प्रथमपङ्क्तौ एव उपविष्टवान् । ततः सः एव प्रथमतया पण्डितान् उद्दिश्य प्रश्नं कुर्वन् शास्त्रगोष्ठ्याः आरम्भं कृतवान् । पण्डिताः अपि विनयेन तस्य प्रश्नस्य उत्तरम् उक्तवन्तः ।

तदनन्तरं पण्डितानां पर्यायः आगतः । तेषु कश्चन वृद्धः ऐश्वर्यं पृष्टवान् – ''असभ्यः कः ?'' इति ।

ऐश्वर्यः सगर्वम् उक्तवान् – ''सः असभ्यः, यः

ज्येष्ठानां, गुरूणां च आदरं न करोति, तेषां पुरतः असमीचीनं व्यवहारं च करोति'' इति ।

पुनः सः एव वृद्धः उक्तवान् – ''भवान् एतदपि जानीयात् यत् असभ्येन पुरुषेण सह यः वार्तालापं करोति, सः अपि असभ्यः भवति'' इति ।

''भवता उक्तं शतं प्रतिशतं सत्यम्'' इति उक्तवान् ऐश्वर्यः ।

पण्डितः हसन् उक्तवान् – ''तर्हि अहं भवता सह वार्तालापं न करिष्यामि'' इति ।

पण्डितस्य वचनं श्रुत्वा ऐश्वर्यः कोपेन – ''भवतः वचनस्य कः अर्थः?'' इति पृष्टवान् ।

पण्डितः शान्ततया उक्तवान् –''भवतः पूज्यः जनकः अस्यां सभायाम् अन्तिमायां पङ्क्तौ उपविष्टवान् अस्ति । कनीयान् अपि भवान् तस्य उपेक्षां कृत्वा प्रथमपङ्क्तौ उपविष्टवान् अस्ति खलु ! एषा सभ्यता वा ?'' इति ।

ऐश्वर्यः तदा गर्वेण उक्तवान् –''अहं तु आचार्यः अस्मि, पण्डितः अपि अस्मि'' इति ।

तदा पण्डितः – ''यद्यपि भवान् आचार्यः अस्ति । अधिकं शास्त्रज्ञानम् अपि भवतः अस्ति, तथापि भवता सत्सङ्गः न कृतः । तदर्थं भवान् गर्वितः अस्ति । पुस्तकानाम् अध्ययनं केवलं न पर्याप्तम् । लोकव्यवहारः अपि ज्ञातव्यः । सज्जनैः ज्येष्ठैः सह कथं व्यवहरणीयम् इति भवान् प्रथमं जानातु'' इति तस्य उपदेशं कृतवान् ।

पण्डितस्य वचनं श्रुत्वा ऐश्वर्यः लज्जया शिरः अवनमय्य स्थितवान् ।

❑❑

# १८. कर्तव्यानि मित्राणि

• डा॰ हरिपालद्विवेदी

कस्मिंश्चित् अरण्ये विशालं सरोवरम् आसीत् । तस्य एकस्मिन् पार्श्वे कश्चन मयूरः निवसति स्म । अपरस्मिन् पार्श्वे एका मयूरी निवसति स्म । तां मयूरीं दृष्ट्वा मयूरः चिन्तितवान् यत् 'अहम् एतां परिणेष्यामि ।' अतः सः मयूरीं पृष्टवान् – ''आवयोः विवाहः कथं न भवेत् ?'' इति ।

मयूरी पृष्टवती – ''भवतः कति मित्रणि सन्ति ?'' इति । मयूरः उक्तवान् – ''कानि अपि मित्राणि न सन्ति'' इति । तत् श्रुत्वा मयूरी उक्तवती – ''इदानीं मम विवाहे आसक्तिः नास्ति ।''

मयूरः चिन्तितवान् यत् मया मित्राणि सम्पादनीयानि । सरोवरतटे ये प्राणिनः निवसन्ति तेषां मैत्रीं सम्पादयामि इति । तस्मिन् सरोवरतटे टिट्टिभः, सिंहः, कूर्मः च निवसन्ति स्म । मयूरः तेषां समीपं गत्वा मधुरसम्भाषणेन तेषां मैत्रीं सम्पादितवान् ।

अनन्तरं पुनः सः मयूरीम् उक्तवान् – ''इदानीं मम त्रीणि मित्राणि सन्ति ।'' मयूरी विवाहम् अङ्गीकृतवती । शुभे मुहूर्ते तयोः विवाहः सञ्जातः ।

कानिचन दिनानि अतीतानि । सरोवरतटे स्थिते कस्मिंश्चित् वृक्षे तयोः वासः आसीत् । अथ कदाचित् केचन व्याधाः मृगयानिमित्तं तद् वनम् आगतवन्तः । आदिनम् अटित्वा अपि ते एकम् अपि मृगं न प्राप्तवन्तः । श्रान्ताः सन्तः ते सरोवरस्य समीपम् आगतवन्तः । जलं पीत्वा वृक्षच्छायायाम् उपविश्य ते चिन्तितवन्तः यत् 'अद्य कोऽपि मृगः न लब्धः । महती बुभुक्षा बाधते । अतः एतं वृक्षम् आरुह्य पश्यामः । अत्र पक्षिणाम् अण्डानि, शावकाः वा लभ्येरन् । तेन वा अस्माकं बुभुक्षा निवारिता भवेत्' इति ।

तस्मिन् एव वृक्षे मयूरदम्पत्योः वासः आसीत् । तयोः अण्डानि अपि तत्र आसन् । व्याधानां सम्भाषणं श्रुत्वा मयूर्याः चिन्ता उत्पन्ना । मयूरः झटिति साहाय्यार्थं मित्राणां समीपं गतवान् । मित्रैः अपि साहाय्यार्थम् अङ्गीकृतम् ।

टिट्टिभः उच्चस्वरेण कोलाहलं कृतवान् । दूरे स्थितः सिंहः उच्चैः गर्जनं कृतवान् । तदा कूर्मः अपि सरोवरतः बहिः आगतः । कूर्मं दृष्ट्वा व्याधाः चिन्तितवन्तः यत् 'सिंहः अत्र आगच्छेत् । तत्पूर्वमेव अस्माभिः इतः पलायनं करणीयम् । एतं कूर्मं वा गृहीत्वा नयामः' इति ।

ते कूर्मं ग्रहीतुं यावत् हस्तं प्रसारितवन्तः तावत् कूर्मः जलं प्रविष्टवान् । व्याधाः तम् अनुसृत्य जलं प्रविष्टवन्तः । तेषां पादौ पङ्के निमग्नौ जातौ । तत्क्षणमेव सिंहः तत्र आगत्य तान् मारितवान् ।

तदा मयूरी मयूरम् उक्तवती – ''विवाहात् पूर्वं मया पृष्टम् आसीत् यत् भवतः कति मित्रणि सन्ति ? तत् इदानीं सार्थकं जातम् । यदि एतानि मित्राणि न स्युः तर्हि कियत् कष्टं भवेत् !''

मयूरः पत्न्याः वचनम् अङ्गीकृतवान् ।

□□

# ११. बुद्धिराजस्य बुद्धिचातुर्यम्

• *दीप्तांशुभास्करः*

कस्यचित् महाराजस्य आस्थाने बुद्धिराजः नाम युवकः आसीत् । सः अत्यन्तं बुद्धिमान् । अतः महाराजः तं तदा तदा प्रशंसति स्म ।

आस्थाने स्थिताः अन्ये जनाः बुद्धिराजाय असूयन्ति स्म । ते कथमपि बुद्धिराजं समस्याजाले पातयितुम् इच्छन्ति स्म । अतः ते सर्वे मिलित्वा एकम् उपायं चिन्तितवन्तः ।

अनन्तरदिने तेषु अन्यतमः महाराजस्य समीपं गत्वा उक्तवान् - ''महाराज ! ह्यः रात्रौ अहम् आकाशतः कुक्कुरस्य ध्वनिं श्रुतवान् । एतस्य किं फलम् इति ज्ञातुम् इच्छामि'' इति । तदा तत्र एव स्थितः अन्यः उक्तवान् - ''महाराज ! आकाशतः कुक्कुरस्य ध्वनिः कथं निस्सरति ? कुक्कुरः भूमौ खलु सञ्चरति ? अतः एषः मिथ्या वदति'' इति ।

परन्तु तत्र स्थिताः अन्ये केचन प्रथमस्य समर्थनं कृतवन्तः । पुनः केचन द्वितीयस्य पक्षं समर्थितवन्तः । एवं द्वयोः गणयोः मध्ये महान् विवादः एव आरब्धः । अन्ते च निर्णयं कर्तुम् अशक्तः महाराजः तदर्थं बुद्धिराजम् आनेतुं सेवकं प्रेषितवान् ।

झटिति एव बुद्धिराजः आगतः । महाराजः तं विवादस्य स्वरूपं विवृतवान् । तत् सर्वं श्रुत्वा बुद्धिराजः मन्दहासेन उक्तवान् - ''महाराज ! प्रथमेन यत् उक्तं तत् सत्यमेव । यतः रात्रौ आकाशतः एव कुक्कुरस्य ध्वनिः श्रुतः । परन्तु एषः कुक्कुरस्य ध्वनिं केवलं श्रुतवान्; अहं तु आकाशे कुक्कुरम् दृष्टवान् अपि'' इति ।

''एतत् कथं शक्यते ?'' इति सर्वे आश्चर्येण पृष्टवन्तः । बुद्धिराजः उक्तवान् - ''रात्रौ कश्चन उलूकः कुक्कुरशावकं गृहीत्वा आकाशे डयमानः आसीत् । तदा भीत्या कुक्कुरशावकः शब्दं करोति स्म । सः एव ध्वनिः एतेन श्रुतः'' इति ।

बुद्धिराजस्य चातुर्यं ज्ञातवताम् अन्येषां मुखानि कान्तिहीनानि अभवन् । महाराजः बुद्धिराजं यथोचितं सत्कृतवान् ।

□□

# २०. तपसः महत्त्वम्

• रविन्द्रनाथ गुरुः

कस्मिंश्चित् ग्रामे कश्चन ब्राह्मणः कश्चन धीवरः च वासं कुर्वन्तौ आस्ताम् । तौ द्वौ अपि शिवभक्तौ । तस्मिन् ग्रामे कश्चन शिवदेवालयः आसीत् । द्वौ अपि प्रतिदिनं शिवालयं गत्वा भक्त्या शिवस्य पूजां कुरुतः स्म । तौ द्वौ अपि अनपत्यौ आस्ताम् । यद्यपि तौ भक्त्या पूजां कुरुतः स्म, तथापि शिवः तयोः इच्छां न पूरितवान् एव ।

कानिचन वर्षाणि अतीतानि । एकस्मिन् दिने धीवरः मद्यं पीत्वा मन्दिरम् आगतवान् । देवस्य पुरतः स्थित्वा सः उक्तवान् – ''भोः शिव ! यदि भवान् अपत्यदानेन मां न अनुगृह्णाति तर्हि एतेन मत्स्यपूरितेन करण्डकेन भवन्तं ताडयामि'' इति ।

तदा शिवः अशरीरवाण्या तम् उक्तवान् - ''वत्स ! भवतः सप्त पुत्राः भविष्यन्ति'' इति । कालान्तरे शिवस्य आशीर्वादेन धीवरस्य सप्त पुत्राः अभवन् । अत्र तु ब्राह्मणः भक्त्या बिल्वपत्रैः अभिषेकैः च शिवस्य पूजां कुर्वन् दिनानि यापयति स्म । परं तस्य तु अपत्यानि न अभवन् एव ।

भक्तयोः विषये एतादृशं व्यवहारं दृष्ट्वा आश्चर्यं प्रकटयन्ती पार्वती शिवं पृष्टवती - ''स्वामिन् ! किम् इदं विचित्रम् ? धीवरः भवन्तं भायितवान् । तथापि भवान् तं पुत्रदानेन अनुगृहीतवान् । एषः ब्राह्मणः भक्त्या भवतः पूजां करोति । तथापि तस्य पूजायाः फलम् एव नास्ति खलु ?'' इति ।

तदा शिवः उक्तवान् - ''धीवराय यद्यपि पुत्राः जाताः, तथापि ते सर्वे लोककण्टकाः भवन्ति । इतःपरम् अहं ब्राह्मणाय पुत्रं दास्यामि । सः लोकोद्धारकः भविष्यति । किन्तु तस्य आयुः केवलं द्वादश वर्षाणि'' इति ।

अपरस्मिन् दिने ब्राह्मणः पूजां कुर्वन् आसीत् । तदा तेन अशरीरवाणी श्रुता - ''भोः ब्राह्मण ! भवतः एकः पुत्रः भविष्यति । तस्य आयुः केवलं द्वादश वर्षाणि'' इति ।

तत् श्रुत्वा ब्राह्मणः चिन्तितवान् - 'मम पुत्रः केवलं द्वादश वर्षाणि एव जीविष्यति चेदपि चिन्ता नास्ति । यदि सत्कर्माणि कुर्यात् तदा तस्य जीवनं सार्थकं भविष्यति । मनुष्यस्य जीवने कर्मणामेव महत्त्वम्' इति ।

केचन मासाः अतीताः । ब्राह्मणस्य एकः पुत्रः जातः । यदा पुत्रस्य सप्त वर्षाणि अभवन् , तदा ब्राह्मणः तस्य उपनयनं कृतवान् । एकादशे वयसि विवाहम् अपि कृतवान् । पुत्रस्य पत्नी अपि भक्त्या महादेवस्य अर्चनां करोति स्म । ब्राह्मणः दृढं विश्वसितवान् यत् 'एषा मम स्नुषा कथमपि मृत्युमुखात् पत्युः रक्षणं करिष्यति' इति ।

स्नुषा शिवपूजनेन सह महालक्ष्मीपूजनम् अपि करोति स्म । कानिचन दिनानि अतीतानि । तस्याः पूजया सन्तुष्टा महालक्ष्मीः तस्याः पुरतः प्रत्यक्षा भूत्वा - ''वत्से ! दीर्घसुमङ्गली भव'' इति उक्त्वा अदृश्या जाता ।

यद्यपि सः ब्राह्मणकुमारः अल्पायुः आसीत्, तथापि देव्याः महालक्ष्म्याः आशीर्वादकारणतः दीर्घायुः सञ्जातः । ततः सः बहुकालपर्यन्तं सुखेन जीवनं कृतवान् ।

□□

# २१. कलायाः सम्माननम्

• *(सं) गङ्गाराम शर्मा*

कस्मिंश्चित् ग्रामे शूरसेनः नाम कश्चन कलावित् आसीत्। सः विचित्राणि वेषभूषणानि धृत्वा स्वकलायाः प्रदर्शनं करोति स्म। तेन एव जीविकां निर्वहति स्म।

गच्छता कालेन शूरसेनस्य कलायां जनानाम् अभिरुचिः न्यूना जाता। तेन कलाप्रदर्शनम् आयोजितं चेदपि तत्र केचन एव आगच्छन्ति स्म। एतस्मात् कारणात् स्वस्य परिवारस्य पोषणेऽपि कष्टम् अनुभूतवान् शूरसेनः। गृहे खादितुम् अपि किमपि न भवति स्म।

अन्ते च अनन्यगतिकतया शूरसेनः तस्य देशस्य महाराजस्य आस्थानं गतवान्। स्वस्य उदरपोषणाय सः महाराजं धनं याचितवान्।

महाराजः विजयवर्मा परोपकारी, कलाराधकः दानशूरश्च इति प्रसिद्धः आसीत्। सः कलाविदां सम्माननं करोति स्म।

किन्तु शूरसेनस्य याचनां श्रुत्वा महाराजः विजयवर्मा उक्तवान् - ''भिक्षायाचनं सः केवलं करोति, यस्य कर्तुं किमपि कार्यं न भवति, यस्य च सामर्थ्यं वा न भवति। भवान् तु महान् कलावित्। भवतः समीपे कलारूपं अमूल्यं धनम् अस्ति। भिक्षादानेन मया तस्याः कलायाः उपहासः कृतः भविष्यति।

भवान् यदि समीचीनतया श्रद्धया च कलाप्रदर्शनं करोति तर्हि अहं भवते पारितोषिकं ददामि'' इति ।

महाराजस्य वचनानि श्रुत्वा शूरसेनः लज्जया शिरः अवनमय्य ततः निर्गतवान् । गमनसमये सः मनसि एव निश्चितवान् यत् 'भविष्यत्काले अहं महाराजस्य सम्मुखे अत्यद्भुतं कलाप्रदर्शनं करिष्यामि' इति । तदनन्तरं शूरसेनः कुत्र गतवान् इति केनापि न ज्ञातम् ।

कानिचन दिनानि अतीतानि । कदाचित् विजयवर्मणः राज्यं प्रति कश्चन साधुः आगतवान् । सः नगरात् बहिः कस्यचन महावृक्षस्य अधः उपविष्टवान् । सर्वत्र वार्ता प्रसृता यत् 'अयं साधुः महात्मा अस्ति । अस्मिन् विशिष्टा शक्तिः अस्ति' इति ।

सर्वे अपि जनाः तं साधुं द्रष्टुम् आगच्छन्ति स्म । सः शान्तमुद्रया मन्दस्मितः सन् आगतान् सर्वान् अपि आशिषा अनुगृह्णाति स्म । ते अपि भक्त्या तस्मै धनकनकादिकम् अर्पयन्ति स्म ।

एषा वार्ता महाराजस्य विजयवर्मणः अपि श्रुतिपथम् आगता । सः अपि एकस्मिन् दिने स्वपरिवारजनैः सह सहस्रं सुवर्णनाणकानि गृहीत्वा साधोः दर्शनार्थम् आगतवान् ।

महाराजः यदा आगतवान् तदा साधुः ध्यानमग्नः आसीत् । महाराजः तस्य पुरतः सुवर्णनाणकैः पूर्णां स्थालिकां स्थापितवान् । साधुः तानि नाणकानि दृष्टवान् चेदपि अदृष्टवान् इव व्यवहरन् पुनरपि ध्यानमग्नः अभवत् । महाराजस्तु विनयेन दूरे उपविष्टवान् । किञ्चित्कालानन्तरं सः साधोः ध्यानभङ्गं कर्तुम् अनिच्छन् दूरादेव तं नमस्कृत्य राजभवनं प्रतिगतवान् ।

परेद्यवि सः साधुः स्वयमेव महाराजस्य आस्थानम् आगतवान् । महाराजः दूरादेव तं दृष्ट्वा तस्य पादस्पर्शं कर्तुं सिंहासनात् अवतीर्णवान् । तावता साधुः महाराजम् उक्तवान् - ''राजन् ! महात्मनः दर्शनेन भवान् सन्तुष्टः किम् ? तर्हि इदानीं भवान् मह्यं पारितोषिकं दातुम् अर्हति'' इति ।

तदा महाराजः शूरसेनम् अभिजानन् आश्चर्येण पृष्टवान् - '' भोः, ह्यः किमर्थं भवान् मया दत्तानि सुवर्णनाणकानि न स्वीकृतवान् ?'' इति ।

शूरसेनः उक्तवान् - ''प्रभो ! तदा अहं साधोः वेषं धृत्वा उपविष्टवान् आसम् । कलाविदः कर्तव्यम् अस्ति यत् सः वेषभूषणस्यापि सम्माननं कुर्यात् । यदा साधुवेषः धृतः भवति तदा सुवर्णस्य स्वीकरणम् औचित्यं न आवहति । अतः मया न स्वीकृतम्'' इति ।

शूरसेनस्य वचनैः सन्तुष्टः महाराजः तस्मै सहस्रं सुवर्णनाणकानि सम्मानपूर्वकं दत्त्वा तं सत्कृतवान् ।

□□

# २२. गुरुभक्तः आरुणिः

• *(सं) विवेकानन्द उपाध्यायः*

वर्षाकालः । आकाशः मेघाच्छन्नः आसीत् । मुनिः धौम्यः आश्रमे शिष्यान् पाठयन् आसीत् । बहवः शिष्याः तस्य आश्रमे अध्ययनं कुर्वन्तः आसन् । तस्य आश्रमः ग्रामात् बहिः आसीत् । तत्र कृषिकार्यं प्रचलति स्म । शिष्याः वेदाध्ययनं कुर्वन्तः कृषिकार्येऽपि साहाय्यं कुर्वन्ति स्म ।

अकस्मात् मेघाः घनीभूताः अभवन् । महती वृष्टिः अपि आरब्धा । क्षणाभ्यन्तरे एव सर्वमपि जलमयम् अभवत् । धौम्यः चिन्तामग्नाः सन् शिष्यान् उक्तवान् - ''एतादृशी वृष्टिः पूर्वं न कदापि मया दृष्टा । यदि क्षेत्रस्य जलबन्धः सम्यक् न क्रियते तर्हि निश्चयेन प्रवाहः सर्वं नाशयति । अतः अस्माभिः शीघ्रमेव तत्र गत्वा क्षेत्रस्य स्थितिः द्रष्टव्या'' इति ।

गुरोः वचनं श्रुत्वा सर्वे अपि वृष्ट्यां गन्तुम् अनिच्छन्तः एकैकं व्याजं वदन्तः ततः निर्गतवन्तः ।

अन्ते आरुणिः नामकः एकः एव तत्र अवशिष्टः । सः परिस्थितिम् अवगत्य गुरुम् उक्तवान् - ''गुरुवर्य ! आज्ञां ददातु । अहमेव क्षेत्रं गमिष्यामि । तत्र क्षेत्रस्य बन्धं सम्यक् कृत्वा प्रत्यागमिष्यामि'' इति ।

आरुणेः वचनं श्रुत्वा गुरुः तस्मै अनुमतिं यच्छन् उक्तवान् - ''वत्स ! गच्छतु । भवान् एव गच्छतु । जलबन्धं सम्यक् कृत्वा आगच्छतु । प्रायः तत्र परिश्रमः अपि अधिकतया करणीयः स्यात्'' इति ।

गुरोः आज्ञानुसारं त्वरितमेव आरुणिः क्षेत्रं गतवान् । क्षेत्रं सर्वं जलमयम् आसीत् । व्रीहेः सस्यानि सर्वाणि अपि जले निमग्नानि आसन् । क्षेत्रस्य जलबन्धः भग्नः जातः आसीत् । ततः जलं प्रवाहरूपेण निर्गच्छति स्म । आरुणिः तत् दृष्ट्वा मृत्तिकया प्रवाहम् अवरोद्धुं प्रयत्नं कृतवान् । बहुधा प्रयत्नः कृतः चेदपि बन्धः दृढतया न स्थितः एव । किङ्कर्तव्यतामूढः सन् सः क्षणकालं यावत् स्थितवान् ।

तदा पुनः गुरोः वचनं स्मृतवान् यत् ''क्षेत्रस्य बन्धं सम्यक् कृत्वा आगच्छतु'' इति । झटिति तस्य मनसि एकः उपायः स्फुरितः । 'यत्र बन्धः भग्नः अस्ति तत्रैव अवरोधरूपेण अहमेव शयनं करोमि चेत् प्रवाहः स्थगितः भवेत्' इति । एवं चिन्तयन् सः यतः जलं बहिः निर्गच्छति तस्मिन् स्थाने आत्मनः शरीरमेव संस्थाप्य शयनं कृतवान् ।

परेद्यवि वृष्टिः अपि स्थगिता । गुरुः सर्वान् अपि शिष्यान् पाठार्थम् आहूतवान् । किन्तु तेषु आरुणिः न आसीत् एव । कश्चन शिष्यः ''ह्यः सायङ्काले क्षेत्रस्य दिशि गच्छन् आसीत् आरुणिः'' इति उक्तवान् । तदा गुरुः ह्यस्तनं विषयं स्मृतवान् ।

शिष्यस्य कथनानुक्षणं गुरुः किमपि अनुक्त्वा साक्षात् क्षेत्रं प्रति गतवान् । तेन सह अन्ये अपि शिष्याः गतवन्तः ।

क्षेत्रे सर्वत्र गुरुः आरुणिम् अन्विष्टवान् । किन्तु कुत्रापि सः न दृष्टः । अन्ततो गत्वा यत्र क्षेत्रस्य बन्धः भग्नः जातः आसीत् तत्र आगतवन्तः । तत्र शयानम् आरुणिं दृष्टवन्तः । तस्य शरीरं शैत्येन काष्ठमिव निश्चलं जातम् आसीत् । शरीरं सर्वं मृत्तिकया लिप्तम् आसीत् ।

आरुणेः अवस्थां दृष्ट्वा गुरोः नेत्राभ्याम् अश्रूणि आगतानि । सः शिष्यम् उत्थाप्य दृढम् आलिङ्गितवान् । आश्रमं नीत्वा तस्य शैत्योपचारं कृतवान् । सन्तोषेण ''भवान् सर्वशास्त्रेषु पारङ्गतः भवतु । उद्दालं भित्वा आगतवान् इति कारणत :भवतः नाम उद्दालकः इति भवतु'' इति आशीर्वादं कृतवान् ।

□□

# २३. न त्वहं कामये राज्यम्...

• *(सं) पुरुषोत्तमः*

खाण्डिक्यः केशिध्वजश्च सहोदरौ । क्षत्रिय-कुलजातौ तौ उभौ अपि महापण्डितौ एव । ज्येष्ठः खाण्डिक्यः श्रौतस्मार्तादिकर्मसु परिणतः आसीत् । अनुजः केशिध्वजः ब्रह्मज्ञानी आसीत् ।

उभौ अपि परमश्रेष्ठौ चेदपि कदाचित् राज्यविषये तयोः कलहः आरब्धः । युद्धम् अपि प्रवृत्तम् । युद्धे केशिध्वजस्य एव जयः जातः । पराजितः खाण्डिक्यः मन्त्रिपरिवारजनैः सह पलायनं कृत्वा अरण्ये वासम् आरब्धवान् ।

केशिध्वजः यद्यपि जयं प्राप्य विशालं राज्यं प्राप्तवान् आसीत्, तथापि तस्य विशेषासक्तिः तु धार्मिककार्येषु एव । अतः सः भगवत्प्रीत्यर्थम् एकं यागम् आरब्धवान् । यागस्य अङ्गतया पशुबलिः दातव्यः आसीत् । किन्तु यागसमये कश्चन व्याघ्रः अकस्मात् यागमण्डपम् आगत्य बलिपशुम् अमारयत् । मृतः पशुः बलिनिमित्तम् अनर्हः खलु भवति ? अतः यागस्य मध्ये विघ्नः उत्पन्नः ।

"पशुमरणस्य किं प्रायश्चित्तम् ?" इति राजा ऋत्विजः पृष्टवान् । ते तद्विषये किमपि न जानन्ति स्म । राजा पण्डितानां सभाम् आयोज्य तत्र तम् एव प्रश्नं पृष्टवान् । किन्तु पशुमरणप्रायश्चित्तविधिं पण्डिताः अपि न जानन्ति स्म । तदा कश्चित् उत्थाय उक्तवान् – "एतद्विषये प्रायश्चित्तं किम् इति वक्तुं समर्थः खाण्डिक्यः एकः एव" इति ।

यद्यपि केशिध्वजः खाण्डिक्यस्य राज्यं स्वायत्तीकृत्य तम् अरण्यं प्रेषितवान् आसीत्, तथापि सः तस्य समीपं निरायुधतया गन्तुं सिद्धः अभवत् । उत्तमे दिने एकाकी एव खाण्डिक्यसमीपं गतवान् अपि ।

केशिध्वजस्य आगमनं दूरादेव दृष्ट्वा खाण्डिक्यः आदौ चिन्तितवान् यत् 'एषः मां मारयितुम् एव आगच्छन् अस्ति' इति । अतः सः युद्धार्थं सिद्धः जातः । किन्तु केशिध्वजस्य निरायुधता यदा ज्ञाता तदा खाण्डिक्यः स्वस्य चिन्तनस्य दोषम् अवगच्छन् सहोदरं प्रेम्णा स्वागतीकृतवान् । यथायोग्यं सत्कृत्य, आगमनकारणं ज्ञात्वा पशुमरणप्रायश्चित्तम् उक्त्वा तं प्रेषितवान् सः ।

केशिध्वजः यज्ञं साङ्गं निर्वर्तितवान् । ततः पुनरपि खाण्डिक्यस्य समीपम् आगत्य – "गुरुदक्षिणा दातव्या इति उद्देशेन अहम् आगतः अस्मि । भवान् यत् इच्छति तत् ददामि । अतः कृपया वदतु – भवते किम् आवश्यकम् ?" इति पृष्टवान् ।

एतत् श्रुत्वा खाण्डिक्यस्य मन्त्रिणः परिवारजनाः च नितरां सन्तुष्टाः । 'अद्य दैवम् अनुकूलकरं जातम् अस्ति । एतावत्पर्यन्तं वयम् अरण्ये वसन्तः बहूनि कष्टानि सोढवन्तः । इतःपरं तानि न भवेयुः । अतः गुरुदक्षिणारूपेण चतुरुदधिसीमान्तं राज्यं याचतु' इति ते तं बोधितवन्तः ।

किन्तु खाण्डिक्यः – 'मह्यं राज्यं मास्तु' इति उक्तवान् । एतत् श्रुत्वा केशिध्वजः उक्तवान् – 'मम ब्रह्मज्ञानम् इदानीं पक्वम् अस्ति । अतः मम राज्यमोहः सर्वथा नास्ति । समग्रं राज्यं भवते ददामि" इति ।

"किं राज्येन ? अहं तत् न इच्छामि" इति उक्तवान् खाण्डिक्यः ।

"भवान् इच्छति वा न वा, भवदीयम् अर्धराज्यम् अहं भवते दास्यामि एव । एतदतिरिच्य मया किं दातव्यम् इति वदतु कृपया" इति उक्तवान् केशिध्वजः ।

"भवान् अध्यात्मरतः । अतः यदि शक्यते तर्हि सकलभवक्लेशस्य संक्षयः यतः भवति तां विद्यां मां बोधयतु" इति प्रार्थितवान् खाण्डिक्यः ।

एतस्य विरक्तिं दृष्ट्वा नितरां सन्तुष्टः केशिध्वजः सरहस्यां योगविद्यां तं बोधयित्वा अर्धराज्यं च तस्मै अनुरोधपूर्वकं दत्त्वा ततः प्रतिगतवान् ।

खाण्डिक्यः राज्यशासनं सर्वथा न इच्छति स्म । किन्तु सहोदरेण बलात् दत्तम् आसीत् राज्यम् । अतः सः अल्पवयस्कं पुत्रम् एव सिंहासने अभिषिच्य मन्त्रिणां स्कन्धे राज्यनिर्वहणभारम् आरोपितवान् । स्वयं योगनिष्ठः सन् गच्छता कालेन मुक्तिं प्राप्तवान् ।

□□

# २४. मूषको वाहनं यस्य....

• *(सं) कु. अमृता मोरेश्वर पाण्डे*

गणेशस्य वाहनं मूषकः इति भवन्तः जानन्ति एव । गणेशः महाकायः । मूषकः तु अतीव लघुप्राणी । सः कथं गणेशस्य वाहनं भवितुम् अर्हति ? इति भवतां सन्देहः उत्पन्नः भवेत् । तदर्थम् एतां कथां पठन्तु भवन्तः ।

एकदा स्वर्गलोके इन्द्रसभा प्रचलन्ती आसीत् । सभायां देवाः गन्धर्वाः ऋषयः चापि आसन् । तत्र क्रौञ्चः नाम कश्चन गन्धर्वः अपि आसीत् । सभायाम् इतस्ततः सञ्चरतः क्रौञ्चस्य पादः अनवधानेन महर्षेः वामदेवस्य शरीरम् अस्पृशत् ।

महर्षिः वामदेवः कुपितः अभवत् । सः कोपेन क्रौञ्चाय – 'भवान् एतस्मिन् क्षणे एव मूषकः भवतु' इति शापं दत्तवान् । क्रौञ्चः मूषकः अभवत् । भूलोकम् आगतवान् च ।

मूषकरूपी क्रौञ्चः भूलोके पराशरमुनेः आश्रमं गत्वा तं मुनिं पीडितवान् । मूषकपीडानिवारणार्थं पराशरमुनिः गणेशम् आहूतवान् । आगतं गणेशं दृष्ट्वा भीतः मूषकः गणेशमेव शरणं गतः । तेन सन्तुष्टः गणेशः मूषकम् उक्तवान् – ''भोः मूषक ! प्रीतोऽस्मि । कमपि वरं याचतु'' इति ।

किन्तु उद्धतः मूषकः गणेशम् उक्तवान् – ''भवान् एव वरं याचतु'' इति ।

मूषकस्य औद्धत्यपूर्णं वचनं श्रुतवतः गणेशस्य महान् कोपः आगतः । सः उक्तवान् – ''अद्य आरभ्य भवान् एव मम वाहनं भवतु'' इति । ततः प्रभृति मूषकः महाकायस्य गणेशस्य वाहनम् अभवत् ।

□□

# २५. अन्नानुसारिणी बुद्धिः

• उमाशङ्कर सुनीलः

कस्मिंश्चित् राज्ये कश्चित् राजा शासनं करोति स्म । सः अनुचितप्रकारेण प्रजाभ्यः धनम् अर्जयति स्म । एवम् अर्जितेन धनेन सः वैभवोपेतं विलासमयं च जीवनं यापयति स्म । राज्ञः एतादृशम् आचरणं दृष्ट्वा राज्यस्य प्रजाः खिन्नाः आसन् ।

एकदा तत् राज्यं कश्चित् महात्मा आगतः । राजा महात्मानं यथोचितं सत्कृत्य प्रार्थितवान् - ''महात्मन्, कतिचन दिनानि राजभवने एव वासं कृत्वा भवान् अस्मान् अनुगृह्णातु'' इति ।

महात्मा राज्ञः अनुरोधपूर्णवचनम् अङ्गीकृत्य 'कानिचन दिनानि राजभवने एव वासः करणीयः' इति निश्चितवान् । महात्मने प्रतिदिनं विशिष्टं भोजनं दीयते स्म । सेवकैः प्रतिदिनं तस्य सेवा शुश्रूषा च क्रियते स्म । महात्मा आनन्देन राजभवने स्थितवान् ।

एकदा महाराज्ञी स्नातुं स्नानगृहं गतवती आसीत् । स्नानगृहात् आगमनसमये सा स्वस्य मुक्ताहारं तत्रैव विस्मृत्य आगतवती । किञ्चित्-कालानन्तरं महात्मा अपि स्नातुं स्नानगृहं गतवान् । सः स्नानगृहे मुक्ताहारं दृष्टवान् । तं दृष्ट्वा महात्मा चिन्तितवान् - 'एतं मुक्ताहारं सम्प्राप्य अहम् आजीवनं सुखेन जीवितुं शक्नोमि । किमर्थं मया प्रतिदिनं भिक्षाटनं करणीयम् ?' इति ।

एवं विचिन्त्य सः तं मुक्ताहारं स्वीकृत्य राजभवनात् निर्गतवान् ।

ततः निर्गतः सः वनाभिमुखः अभवत् । आदिनं चलित्वा रात्रौ वने एकत्र सुरक्षिते स्थले सः विश्रामं कृतवान् । प्रातः उत्थाय प्रातर्विधिं समाप्य सः यदा उपविष्टवान् तदा पूर्वदिने स्वेन कृतस्य कार्यस्य विषये तस्य मनसि चिन्तनम् आरब्धम् । सहसा तस्य विचारः परिवर्तितः जातः । यथाशीघ्रं ततः सः मुक्ताहारं प्रत्यर्पयितुं निश्चितवान् । अतः सः राजभवनं गतवान् । तत्र राज्ञः पुरतः स्थित्वा स्वस्य अपराधम् अङ्गीकृत्य राज्ञे मुक्ताहारं समर्पितवान् । 'मह्यं यथोचितं दण्डं ददातु कृपया' इति महाराजं प्रार्थितवान् च ।

महात्मनः इदं परिवर्तनं दृष्ट्वा राज्ञः आश्चर्यम् अभवत् । सः स्वयमेव पृष्टवान् - ''भोः महात्मन्, प्रथमं तु भवान् मुक्ताहारं चोरयित्वा इतः निर्गतवान् आसीत् । पुनः हारं प्रत्यर्पयितुं दण्डं प्राप्तुं च किमर्थम् अत्र आगतवान् ?'' इति ।

''सर्वम् अन्नस्य प्रभावः । मानवाः यादृशं अन्नं खादन्ति तादृशी एव भवति बुद्धिः अपि । अहं कतिचन-दिनेभ्यः अनैतिकप्रकारेण अर्जितस्य भवतः अन्नस्य सेवनं कुर्वन् आसम् । तादृशस्य अनैतिकस्य अन्नस्य खादनतः मम आचारे विचारे च अपि असमीचीनः प्रभावः उत्पन्नः आसीत् । अतः एव अहं महाराज्ञ्याः मुक्ताहारं चोरितवान् । इतः निर्गमनानन्तरम् अत्रत्यम् अन्नम् उदरात् यदा निर्गतं तदा मम पूर्वतनः विचारः पुनः स्फुरितः । स्वच्छः विचारः यदा स्फुरितः तदा अहम् एतं मुक्ताहारं भवते समर्पयितुं, कृतस्य अपराधस्य निमित्तं दण्डं स्वीकर्तुं च अत्र आगतवान्'' इति सविनयं निवेदितवान् महात्मा ।

महात्मनः इदं वचनं श्रुत्वा राजा महात्मानं सादरं विमोचितवान् । स्वयमपि ततः आरभ्य अनैतिकमार्गेण धनार्जनं परित्यक्तवान् । दीर्घकालं यावत् च तत् राज्यम् उत्तमप्रकारेण परिपालितवान् च ।

□□

# २६. मोक्षार्थम् इहलोके यत्नः

• *(सं) इन्दिरातनयः*

मत्स्यध्वजः कश्चन महाराजः । भोगे तस्य विशेषासक्तिः आसीत् । कदाचित् सः सर्वालङ्कारभूषितः सन् भोगिनीनां गृहं गच्छन् आसीत् । गमनमार्गे कस्यचन पुरोहितस्य गृहम् आसीत् । पुरोहितः आकण्ठं भुक्त्वा गृहस्य पुरतः उपविश्य समययापनार्थं श्लोकान् वदन् आसीत् उच्चस्वरेण ।

राजा यदा गच्छन् आसीत् तदा पुरोहितेन एकः श्लोकः गीतः –

*वर्षार्थमष्टौ प्रयतेत मासान् निशार्थमर्धं दिवसे यतेत ।*<br>
*वार्धक्यहेतोर्वयसा नवेन परत्रहेतोरिह जन्मना च ।। इति ।*

(वर्षाकालस्य सुखार्थं शिष्टेषु अष्टसु मासेषु परिश्रमः करणीयः । रात्रौ सुखनिद्राप्राप्त्यर्थं दिने श्रमः करणीयः । वार्धक्ये सुखेन स्थातुं यौवनकाले प्रयत्नः कर्तव्यः । परलोकसुखार्थम् इहलोके प्रयत्नवान् भवेत् मनुजः ।)

एतं श्लोकं श्रुतवतः राज्ञः मनसि विवेकः उदितः । 'राजवैभवे आसक्तः अहं परमसुखात् वञ्चितः अभवम्' इति चिन्तयन् सः सङ्कल्पितवान् यत् मया निस्सङ्गत्वं प्राप्य मोक्षः सम्पादनीयः इति ।

अतः अनन्तरदिने एव सः सर्वान् पण्डितान् मेलयित्वा आज्ञापितवान् – ''मोक्षप्राप्त्यर्थम् अतिश्रेष्ठः मार्गः कः ? कस्य आराधनात् मुक्तिः सुलभा भवेत् ? इति भवद्भिः निर्णेतव्यम् । वादाः प्रवर्तन्ताम् । वादे यः जयं प्राप्नोति तस्मै विशेषपारितोषिकं दीयते'' इति ।

विजयिने पण्डिताय दातुम् एव सुवर्णनाणकानाम् एकं महाबन्धम् अपि आस्थानस्तम्भे बद्धवान् राजा ।

पण्डितानां वादः आरब्धः । कानिचन दिनानि महती चर्चा प्रवृत्ता । अन्ते विष्णुचित्तः नाम पण्डितः जयं प्राप्य पारितोषिकं प्राप्तवान् ।

तस्य उपदेशं श्रुत्वा भगवतः विष्णोः आराधनं कुर्वन् ग्रन्थाध्ययनं च कुर्वन् राजा निवृत्तिमार्गेण विशेषप्रगतिं प्राप्य अन्ते मोक्षं प्राप्तवान् ।

# २७. सम्मानयोग्यः कः ?

कस्मिंश्चित् राज्ये कश्चन महाराजः आसीत् । तस्य पुत्रद्वयम् आसीत् । तयोः शिक्षणार्थं महाराजः कश्चित् आचार्यं निश्चितवान् । आचार्यस्य गृहं प्रति पुत्रौ प्रेषितवान् च ।

आचार्यस्य गृहं नगरात् बहिः आसीत् । राजकुमारौ तत्र एव वासं कुर्वन्तौ शिक्षणम् आरब्धवन्तौ । आचार्यस्य महत् ज्ञानम् आसीत् । तस्य पाठनकौशलम् अपि अद्भुतम् आसीत् । अतः राजकुमारौ श्रद्धया अभ्यासं कृतवन्तौ । महाराजः अपि मध्ये मध्ये तत्र गत्वा पुत्रयोः शिक्षणे प्रगतिं परिशीलयति स्म ।

एकस्मिन् दिने सायङ्काले महाराजः सपत्नीकः आचार्यस्य गृहं गतवान् । यदा सः गृहस्य पुरतः आगतवान् तदा इतोऽपि पाठः प्रचलति स्म । महाराजः 'पाठे विघ्नः न करणीयः' इति चिन्तयित्वा बहिः एव स्थित्वा पश्यन् आसीत् ।

किञ्चित् कालानन्तरं पाठः समाप्तः । पाठं समाप्य यदा आचार्यः उत्थितवान्, तदा द्वौ अपि राजकुमारौ झटिति धावित्वा अनतिदूरे एव स्थापिते आचार्यस्य पादरक्षे गृहीतवन्तौ । तयोः मध्ये कलहः आरब्धः यत् 'पादरक्षे अहं गृह्णामि, अहं गृह्णामि' इति । राजा दूरे एव स्थित्वा एतत् पश्यन्

आसीत् । अनन्तरं राजकुमारयोः मध्ये निर्णयः जातः यत् एकेन एका पादरक्षा ग्रहीतव्या, अन्येन अपरा इति ।

तथैव तौ पादरक्षे गृहीत्वा गुरोः पुरतः स्थापितवन्तौ । गुरुः अपि प्रीत्या तयोः शिरसि हस्तं निधाय आशीर्वादं कृतवान् ।

बहिः स्थित्वा एतत् दृष्ट्वा महाराजः अतीव सन्तुष्टः अभवत् । पुत्रयोः विनयं ज्ञात्वा सम्प्रीतः सः किमपि अनुक्त्वा यथा ते त्रयः अपि न जानीयुः तथा राजभवनं प्रत्यागतवान् । राज्ञी अपि तम् अनुसृतवती ।

अनन्तरदिने महाराजः पाठसमये एव तत्र आगतवान् । पाठसमाप्तेः अनन्तरम् सः आचार्यं शिरसा प्रणम्य पृष्टवान् – ''आचार्य ! मम एकः प्रश्नः अस्ति । कृपया उत्तरं वदतु'' इति ।

''कः प्रश्नः ? पृच्छतु । यदि जानामि, तर्हि अवश्यम् उत्तरं वदामि'' इति आचार्यः उक्तवान् ।

महारजः पृष्टवान् – ''मम राज्ये सर्वेषाम् अपेक्षया आदरणीयः सम्मानयोग्यः च कः ?'' इति ।

आचार्यः झटिति उक्तवान् – ''महाराज ! अत्र चिन्तनीयं किम् अस्ति ? अस्य राज्यस्य अधिष्ठाता, प्रजानां रक्षकः, परिपालकश्च भवान् एव । भवन्तं विहाय को वा अन्यः तादृशः भवेत् !'' इति ।

तस्य वचनम् अनङ्गीकुर्वन् महाराजः उक्तवान् – ''आचार्य ! वस्तुस्थितिः एवं नास्ति । प्रश्नस्य उत्तरम् अहमेव वदामि । यस्य पादरक्षां ग्रहीतुं स्वयं राजकुमारौ एव कलहं कुरुतः, तस्य अपेक्षया आदरणीयः, सम्मानयोग्यः वा को वा अन्यः भवितुम् अर्हति !'' इति ।

आचार्यः पूर्वदिने प्रवृत्तं स्मरन् उक्तवान् – ''महाराज ! राजकुमारौ न केवलम् अध्ययनासक्तौ, तौ अतीव विनयशीलौ अपि । अतः एव तथा व्यवहारं कृतवन्तौ'' इति ।

❑❑

# २८. कः श्रेष्ठः ?

• *(सं) विमला, कासरगोड्डु*

**क**स्मिंश्चित् दिने भगवान् श्रीकृष्णः महाराजस्य युधिष्ठिरस्य आस्थानम् आगतवान् । सम्भाषणं कुर्वन् युधिष्ठिरः भगवन्तं श्रीकृष्णं पृष्टवान् – ''हे, सर्वज्ञ ! जनाः वदन्ति यत् मयि द्वेषमत्सरादिगुणाः न सन्ति इति । मम समीपम् आगतः कोऽपि याचकः अद्यपर्यन्तं रिक्तहस्तेन मया न प्रतिप्रेषितः । एवं सत्यपि केचन जनाः कर्णः एव मदपेक्षया श्रेष्ठः इति वदन्ति । किमर्थम् ?'' इति ।

श्रीकृष्णः मन्दहासेन – ''यदा उचितः अवसरः लभ्यते तदा भवतः सन्देहं निवारयिष्यामि'' इति उक्तवान् ।

कानिचन दिनानि गतानि । वर्षाकालः समागतः । मासं यावत् महती वृष्टिः आसीत् । तादृशसन्दर्भे कदाचित् श्रीकृष्णः पाण्डवानां गृहम् आगतवान् ।

पाण्डवाः भक्त्या तस्य स्वागतं कृतवन्तः । श्रीकृष्णः स्वस्य आगमनस्य उद्देशम् उक्तवान् - "यज्ञकार्याय शकटमितं शुष्कं काष्ठम् आवश्यकम्" इति ।

पाण्डवानां महती समस्या जाता । यतः वृष्टिकारणतः सर्वमपि काष्ठम् आर्द्रम् आसीत् । तथापि ते कथञ्चित् कुतश्चित् किञ्चित् प्रमाणेन काष्ठं संगृह्य भगवते श्रीकृष्णाय दत्तवन्तः । प्रतिकूलवातावरणे अपि अस्माकं प्रभोः अपेक्षां किञ्चित्प्रमाणेन वा पूरयितुं शक्ताः वयम् इति तृप्तिम् अनुभूतवन्तः ते ।

श्रीकृष्णः ततः कर्णस्य गृहं गतवान् । पुरुषोत्तमं श्रीकृष्णं दृष्ट्वा कर्णः महता सन्तोषेण तस्य स्वागतं कृतवान् । कुशलप्रश्नानन्तरं श्रीकृष्णः कर्णम् अपि स्वस्य अपेक्षाम् उक्तवान् ।

कर्णः सन्तोषेण अङ्गीकृतवान् । श्रीकृष्णम् उक्तवान् च - "भगवन् ! भवान् किञ्चित्कालं यावत् विश्रान्तिम् अनुभवतु । तावता अहं काष्ठस्य व्यवस्थां करिष्यामि" इति ।

श्रीकृष्णः तत् अङ्गीकृत्य विश्रान्त्यर्थं तेन सूचितं स्थानं गत्वा अत्यल्पकाले एव प्रत्यागतवान् । सः पश्यति - कर्णः शुष्ककाष्ठस्य राशिमेव सज्जीकृतवान् आसीत् । एतादृशे वृष्टिकाले शुष्कं काष्ठं कुतः लब्धम् इति श्रीकृष्णः विस्मितः अभवत् । तदा सः ज्ञातवान् यत् कर्णः काष्ठसम्पादनार्थं स्वस्य गृहस्य वातायनं, द्वारं, मञ्चं, स्वस्य सिंहासनं चापि विदीर्णवान् आसीत् !

ततः कृष्णः कर्णम् अभिनन्द्य काष्ठम् अस्वीकृत्य एव ततः युधिष्ठिरस्य भवनं गतवान् । कृष्णस्य मुखात् प्रवृत्तं सर्वं श्रुत्वा युधिष्ठिरः लज्जितः अभवत् । सः ज्ञातवान् यत् जनाः किमर्थं कर्णं श्रेष्ठं मन्यन्ते इति ।

❑❑

# २९. विनायासेन प्राप्तं सौभाग्यम्

• *(सं) सुब्रह्मण्यः*

कस्मिंश्चित् ग्रामे कश्चन रजकः आसीत् । सः ग्रामजनानां वस्त्राणि प्रक्षाल्य ददाति स्म । ततः प्राप्तेन अल्पेन धनेन जीवनं करोति स्म च । जीर्णः कुटीरः, एकः कृशः गर्दभः च तस्य सम्पत्तिः आसीत् । सः अनाथः आसीत् ।

एकदा चरणार्थं वनं गतः तस्य गर्दभः दिनम् अतीतं चेदपि गृहं न प्रत्यागतवान् । महती वृष्टिः अपि आरब्धा । अतः रजकः चिन्तामग्नः अभवत् ।

किङ्कर्तव्यतामूढः सन् सः तस्यां महत्यां वृष्ट्याम् एव गर्दभस्य अन्वेषणार्थं वनं गतवान् । बहुधा अटितं चेदपि गर्दभः न लब्धः एव । अतः सः निराशया प्रतिगमनम् आरब्धवान् ।

तस्मिन् समये एव तडितः प्रकाशे कस्यचित् वृक्षस्य अधः स्थितं कञ्चित् प्राणिनं सः दृष्टवान् । 'मम गर्दभः लब्धः' इति चिन्तयन् सः रज्ज्वा तं बद्ध्वा गृहम् आनीतवान् ।

कुटीरस्य पार्श्वे तं बद्ध्वा, रजकः अन्तः गत्वा निश्चिन्ततया निद्रां कृतवान् । अदृष्टवशात् सः न ज्ञातवान् यत् स्वेन व्याघ्रः आनीतः इति । व्याघ्रः अपि 'मदपेक्षया बलिष्ठः कश्चित् मां नयन् अस्ति' इति चिन्तयन् भयेन तूष्णीं रजकेन सह आगतवान् आसीत् ।

प्रातःकालः अभवत् । मार्गे अटन्तः ग्रामजनाः सर्वे रजकस्य गृहस्य पुरतः स्थितं रज्जुबद्धं व्याघ्रं दृष्ट्वा आश्चर्यचकिताः अभवन् । जनान् दृष्ट्वा व्याघ्रः गर्जनम् आरब्धवान् । तस्य गर्जनं श्रुत्वा रजकः कुटीरात् बहिः आगतवान् । व्याघ्रस्य दर्शनात् तस्य शरीरे कम्पनम् आरब्धम् ।

तस्य प्रदेशस्य महाराजः ग्रामीणानां द्वारा एतां वार्तां ज्ञातवान् । अनुक्षणं सः भुषुण्डिं गृहीत्वा भटैः सह रजकस्य गृहम् आगतवान् ।

जनसम्मर्दं दृष्ट्वा व्याघ्रः उच्चैः गर्जनम् आरब्धवान् । राजाज्ञानुसारं भटाः भुषुण्ड्या व्याघ्रं मारितवन्तः ।

महाराजः रजकं बहुधा श्लाघितवान् । ततः तं स्वस्य सेनाधिकारिणः स्थाने नियोजितवान् अपि । रजकः महता सन्तोषेण स्वकुटीरं कस्मैचित् निर्धनाय दत्त्वा स्वयं नूतने भवने वासम् आरब्धवान् ।

अथ कदाचित् प्रतिवेशिराज्यस्य महाराजः एतस्य राज्यस्य उपरि आक्रमणं कर्तुम् आगतवान् । राजधानीं परितः विद्यमानेषु पर्वतशिखरेषु शत्रुसैनिकानां शिबिराणि निर्मितानि अपि अभवन् ।

गूढचारमुखात् एतां वार्तां श्रुत्वा महाराजः नूतनं सेनाधिकारिणम् आहूतवान् । ''भवान् महाशूरः । यथा तं व्याघ्रं गृहीत्वा आनीतवान् तथैव शत्रुराजम् अपि गृहीत्वा आनयतु'' इति तम् आज्ञापितवान् ।

महाराजस्य आज्ञायाः श्रवणात् रजकस्य भयम् आरब्धम् । 'राजाज्ञायाः उल्लङ्घनम् असाध्यम् । अतः इतः पलायनम् एव वरम्' इति सः चिन्तितवान् । अतः कांश्चन चषकान् कलशान् च वस्त्रेण बद्ध्वा सः गूढचारस्य वेषं धृत्वा गृहात् बहिः आगतवान् ।

मध्यरात्रसमयः । अन्ये सैनिकाः सर्वे तं दृष्टवन्तः । तदा सः ''भोः ! सर्वे तूष्णीं तिष्ठन्तु'' इति शनैः उक्तवान् । सैनिकाः अपि 'सेनाधिकारी कमपि उपायं करोति' इति चिन्तयन्तः तूष्णीं स्थितवन्तः ।

रजकः मन्दं पर्वतस्य समीपम् आगतवान् । तत्र तत्र शत्रुसैनिकानां शिबिराणि दृश्यन्ते स्म । भयेन कम्पमानः सः मन्दं पर्वतस्य आरोहणं कर्तुम् उद्युक्तः जातः । कथञ्चित् प्रातःकालात् पूर्वम् अपरं देशं गन्तुम् इच्छति स्म सः ।

त्वरया गमनसमये वस्त्रेण बद्धानि पात्राणि अधः पतितानि । तेन महान् शब्दः जातः । शिबिरे निद्रामग्नाः सैनिकाः झटिति उत्थिताः । परं सर्वत्र अन्धकारः आसीत् । अतः ते किं प्रवृत्तम् इत्येव न ज्ञातवन्तः । शत्रुसैनिकाः एव उपरि आक्रमणं कृतवन्तः इति मत्वा परस्परं युद्धम् आरब्धवंन्तः । बहवः मृताः अपि ।

अत्रान्तरे पतितानि पात्राणि नेतुम् अधः आगतः रजकः प्रथमं दृष्टं शिबिरं प्रविष्टवान् । तत् शत्रुराजस्य एव शिबिरम् आसीत् । प्रविशन्तं तं दृष्ट्वा शत्रुराजः 'अहम् असहायः जातः' इति मत्वा शरणागतः अभवत् ।

स्वस्य भाग्यं श्लाघमानः रजकः आनन्देन तं गृहीत्वा स्वस्य महाराजस्य पुरतः आनीतवान् । सैनिकानां साहाय्यं विना शत्रुराजम् आनीतवतः रजकस्य शौर्यं महाराजः बहुधा श्लाघितवान् । स्वपुत्र्या सह तस्य विवाहं निर्वर्त्य राज्यं तस्मै एव समर्पितवान् ।

□□

# ३०. गुणाः पूजास्थानम्

• *(सं) जनार्दन देवदकेरि*

श्रीरामस्य राज्याभिषेकसमयः । श्रीरामः सर्वेषां कृते स्वहस्तेन सम्मानपूर्वकम् उपायनं ददाति स्म । सभायां सर्वत्र शान्तता आसीत् ।

रामस्य पार्श्वे सीता उपविष्टा आसीत् । सीता अकस्मात् विभीषणं दृष्टवती । विभीषणस्य मुखे विषादस्य रेखा, नेत्रे अश्रूणि ! विभीषणस्य पार्श्वे सुग्रीवः अस्ति । सुग्रीवः अपि रोदनं करोति !!

एतत् दृष्टवत्याः सीतायाः महती व्यथा जाता । सा पृष्टवती – ''लङ्काधिपते विभीषण ! अस्मिन् मङ्गलक्षणे किमर्थं रोदनम् ? किमपि अपमाननं जातं वा ? सुग्रीव ! भवान् किमर्थं दुःखी अस्ति ?'' इति ।

सुग्रीवः उक्तवान् – ''जगज्जननि ! भवती अस्माकं माता । भवत्याः पुत्राणाम् अस्माकं कष्टं कथम् ? रामराज्ये अपमाननम् अपि कथम् ? सत्यं वदामि – रामराज्ये यत् सम्माननं प्राप्तं तत् अविस्मरणीयम् ।''

तदा सीता पृष्टवती – ''तर्हि दुःखस्य किं कारणम् ?''

सुग्रीवः उक्तवान् – ''इदम् अस्माकं कर्मफलम् । अहं तु सर्वथा मन्दभाग्यः । राज्याभिषेकम् आनन्देन पश्यन् आसम् । मध्ये भरतं दृष्टवान् । भरतः रामस्य पार्श्वे स्थित्वा वीजयति स्म । भरतं दृष्ट्वा अहं चिन्तितवान्, कीदृशः भाग्यवान् भरतः ! राज्यं लब्ध्वा अपि सः त्यागं कृतवान् । तपस्वी भूत्वा राज्यव्यवस्थां कृतवान् । अहं तु राज्यस्य आशां कृतवान् । स्वहस्तेन अग्रजस्य हननं कृतवान् । कुत्र भरतः? कुत्र अहम् ? इदम् एव मम दुःखस्य कारणम्, अश्रूणि तु पश्चात्तापस्य'' इति ।

विभीषणः उक्तवान् – ''मातः ! अहं लक्ष्मणं दृष्टवान् । लक्ष्मणः महत्या श्रद्धया वीजयति स्म । कीदृशः महात्मा लक्ष्मणः ! प्राणस्य आशां त्यक्त्वा रामसेवां कृतवान् । निष्कपटं प्रेम तस्य । अहं तु अभाग्यः अग्रजस्य हननं कारितवान्'' इति ।

पुनः सुग्रीवः उक्तवान् – ''जननि ! अद्य तु अहं रामराज्यं दृष्टवान् । सफलं मम जन्म ।''

विभीषणः अपि उक्तवान् – ''अम्ब ! भरतभूमेः दर्शनेन मम जन्म पवित्रं जातम् । मम पुनर्जन्म भवति चेत् भरतभूमौ एव भवतु ।''

सीता आसनात् उत्थिता । स्वहस्तेन उभयोः अश्रूणि मार्जितवती । सुग्रीवः विभीषणश्च सीतायाः पादयोः वन्दनं कृतवन्तौ । विषादः समाप्तः । प्रसन्नता व्याप्ता !

□□

# ३१. भक्तिपरीक्षा

• (सं) कपिल गलगलि

कस्मिंश्चित् नदीतीरे शिवगिरिः नाम ग्रामः आसीत् । तस्मिन् ग्रामे हरिदत्तः इति कश्चन ब्राह्मणः निवसति स्म । सः परमभक्तः आसीत् ।

एकदा हरिदत्तः सायङ्काले ग्रामे अटन् आसीत् । मार्गे सञ्चरन् सः एकं मांसापणं दृष्टवान् । मांसापणे मांसतोलनार्थम् उपयुज्यमानायाः तुलायाः उपरि तस्य दृष्टिः अकस्मात् पतिता । तस्यां तुलायां विद्यमानं शिलाखण्डं दृष्ट्वा सः आश्चर्यचकितः खिन्नः च अभवत् । यतः तत्र मांसस्य तोलनं कर्तुं तुलायां शालग्रामशिला स्थापिता आसीत् । हरिदत्तः "तं शालग्रामं मह्यं ददातु" इति आपणिकं प्रार्थितवान् ।

तदा सः आपणिकः उक्तवान् - "एतं शिलाखण्डम् अहं दातुं सज्जः अस्मि । परन्तु भवता मह्यं तोलनार्थम् अन्यत् किमपि दातव्यं भवति" इति । हरिदत्तः सन्तोषेण तस्मै आपणिकाय भारेण शालग्रामेण समानम् एकम् अयःखण्डं दत्तवान् । आपणिकात् शालग्रामं स्वीकृत्य गृहं नीत्वा पूजयितुम् आरब्धवान् ।

तस्मिन् एव दिने रात्रौ हरिदत्तः निद्रायाम् एकं स्वप्नं दृष्टवान् । स्वप्ने नृसिंहदेवः - "भवान् यस्मात् आपणात् माम् आनीतवान् तत्रैव स्थापयित्वा आगच्छतु । नो चेत् भवतः सर्वनाशः भविष्यति" इति तं भायितवान् ।

परन्तु हरिदत्तः तं शालग्रामं न त्यक्तवान् । तस्मात् कारणात् अपरस्मिन् दिने तस्य माता दिवङ्गता । तद्दिने रात्रौ पुत्रः अपि मृतः । अकस्मात् सञ्जातेन अग्निस्पर्शेण तस्य गृहमपि दग्धम् । हरिदत्तः पार्श्ववायुरोगेण पीडितः अपि अभवत् । तथापि सः शालग्रामं न त्यक्तवान् । कथञ्चित् परिसर्पन् नदीतीरम् आगतवान् । तत्रैव विद्यमाने एकस्मिन् पर्णपुटे शालग्रामं संस्थाप्य भक्त्या तस्य पूजां कृतवान् ।

एतावत्सु दुस्सहेषु कष्टेषु सत्सु अपि स्वनिष्ठाम् अपरित्यक्तवतः हरिदत्तस्य पूजया प्रसन्नः नृसिंहः तत्र प्रत्यक्षः अभवत् । हरिदत्तम् उद्दिश्य सः - "हरिदत्त ! उत्तिष्ठतु । गृहं गच्छतु । भवतः पत्नी पुत्रश्च तत्र प्रतीक्षायां स्तः । अहं तावत् भवतः निष्ठां परीक्षितुं भवन्तं पीडितवान्" इत्युक्त्वा अदृश्यः अभवत् । ततः हरिदत्तः सन्तोषेण गृहं गतवान् । ततः सः बहुकालपर्यन्तं शालग्रामपूजां कुर्वन् स्वपरिवारेण सह सन्तोषेण जीवनं कृतवान् ।

□□

# ३२. सुधीरस्य बुद्धिमत्ता

*• (सं) शान्ता वेङ्कटरामन्*

धर्मपुरीनामके राज्ये सत्यपालः नाम महाराजः आसीत् । सः अतीव दयालुः, विवेकी, सुशीलः च । सर्वदा प्रजानां हितचिन्तनमेव सः करोति स्म । प्रजाः यदा कदा वा आगत्य तस्मै स्वकीयं कष्टं निवेदयन्ति स्म । महाराजः अपि श्रद्धया तत् श्रुत्वा तस्य परिहारं चिन्तयति स्म ।

एकदा केचन आटविकाः महाराजस्य दर्शनार्थम् आगतवन्तः । ते तं निवेदितवन्तः - ''महाप्रभो ! अरण्यवासिनः वयम् अतीव भीताः स्मः । अस्माकं भीतेः कारणं न वन्यमृगाः, अपि तु उग्रकायः दुष्टः कश्चन राक्षसः । सः गुहायां निवासं करोति । वने विद्यमानान् प्राणिनः, अरण्यवासिनः च हत्वा खादति । अस्मान् बहुधा पीडयति च । तेन सह अस्माभिः युद्धम् अपि कृतम् । परन्तु तेन न कोऽपि लाभः जातः । अतः भवान् तस्मात् राक्षसात् अस्मान् रक्षतु'' इति ।

आटविकानां वचनानि श्रुत्वा महाराजः उक्तवान् - ''शीघ्रमेव भवतां कष्टस्य निवारणोपायं चिन्तयामि । भवन्तः निश्चिन्ताः भवन्तु'' इति । सर्वे आटविकाः निश्चिन्ततया वनं प्रतिगतवन्तः ।

अनन्तरदिने प्रातः महाराजः मन्त्रिणम् आहूय सर्वं वृत्तान्तं श्रावयित्वा - ''यः एतस्य राक्षसस्य मारणं करोति, तस्मै वीरपुरुषाय लक्षसुवर्णनाणकानि दीयन्ते'' इति सर्वत्र राज्ये उद्घोषणं कारयतु'' इति उक्तवान् । तदनुसारम् उद्घोषणं कारितम् । राज्ये सर्वत्र वार्ता प्रसृता ।

तस्मिन् एव दिने सायङ्काले रुद्रः नाम कश्चन दृढकायः पुरुषः राजास्थानम् आगतवान् । सः मन्त्रिणम् उक्तवान् - ''तं राक्षसं

मारयितुम् अहं प्रयत्नं करोमि । तदर्थं मह्यम् एकः अश्वः, तीक्ष्णः खड्गः, किञ्चित् धनं चापि आवश्यकम्'' इति । मन्त्री रुद्राय आवश्यकानि वस्तूनि दत्तवान् ।

परेद्यवि प्रातः एव रुद्रः अश्वम् आरुह्य, खड्गं गृहीत्वा वनं गतवान् । अनतिकाले एव तेन राक्षसस्य निवासस्थानं दृष्टम् । गुहायाः द्वारे एव राक्षसः स्थितवान् आसीत् । तं राक्षसं दृष्ट्वा रुद्रः अपि भीतः अभवत् । यतः तादृशं घोरं रूपं न कदापि दृष्टम् आसीत् तेन । तथापि सः क्षणाभ्यन्तरे धैर्यं सम्प्राप्य राक्षसस्य पुरतः गतवान् ।

किन्तु तावति काले राक्षसः रुद्रं दृष्टवान् । सः एकेनैव मुष्टिप्रहारेण तं यमलोकं प्रेषितवान् ।

रुद्रस्य मारणवार्तां श्रुत्वा महाराजः अतीव दुःखितः अभवत् । ततःपरम् अपि बहवः युवकाः धनेच्छया राक्षसस्य मारणार्थं गतवन्तः । परन्तु ते सर्वे अपि राक्षसेन मारिताः अभवन् ।

एकस्मिन् प्रभाते सुधीरः नाम कश्चन सामान्यकायः युवकः राजास्थानम् आगत्य मन्त्रिणम् उक्तवान् - ''अहं राक्षसस्य मारणार्थं गच्छामि'' इति ।

मन्त्री तु तम् आपादमस्तकं दृष्ट्वा आश्चर्यचकितः सन् उक्तवान् - ''अये मूर्ख ! बहवः दृढकायाः युवकाः तस्य मारणे विफलाः जाताः, मरणं प्राप्तवन्तः च । भवान् दृढकायः अपि न । कथं वा तेन राक्षसेन सह युद्धं कुर्यात् ?'' इति ।

मन्त्रिणः वचनं श्रुत्वा सुधीरः उक्तवान् - ''यद्यपि न अहं दृढकायः, तथापि अहं मम बुद्धिबलात् एव तस्य मारणं कर्तुं शक्नोमि इति निश्चयेन वदामि । द्वित्रदिनाभ्यन्तरे एव तस्य राक्षसस्य शिरः कर्तयित्वा महाराजस्य पदतले अर्पयिष्यामि । अत्र न कोऽपि संशयः'' इति ।

मन्त्री अपि - ''तथैव अस्तु'' इति उक्त्वा तस्मै आवश्यकानि वस्तूनि दत्तवान् ।

सुधीरः ततः राक्षसस्य आवासस्थानं प्रति प्रस्थितवान् । किञ्चित् कालं यावत् वने इतस्ततः अटन् राक्षसावासस्थानं प्राप्तवान् । गुहाद्वारे एव राक्षसः स्थितवान् आसीत् । सः सुधीरं दृष्ट्वा 'एषः मां हन्तुम् आगतवान्' इति मत्वा उच्चैः अट्टहासं कृतवान् ।

सुधीरम् उद्दिश्य - ''भोः मूर्ख ! मां हन्तुं भवान् आगतवान् ? भवतः धैर्यं प्रशंसनीयम् एव । अलं साहसेन ! यदि भवान् जीवितुम् इच्छति, तर्हि इदानीम् एव इतः प्रतिनिवर्तताम्'' इति गर्जितवान् ।

क्षणकालं भीतः अभवत् सुधीरः । तथापि धैर्येण राक्षसस्य समीपं गतवान् । झटिति एव स्वहस्तेन गृहीतम् अतीव कटुयुक्तमरीचिकाचूर्णं राक्षसस्य उपरि बलात् प्रक्षिप्तवान् । तत् चूर्णं राक्षसस्य नेत्रयोः पतितम् । तेन सः महतीं वेदनाम् अनुभवन् नेत्रे निमील्य उच्चैः आक्रोशं कृतवान् ।

सुधीरः वेगेन खड्गं चालयन् एकेन एव प्रहारेण तस्य शिरः छित्वा भूमौ पातितवान् ।

ततः तत् शिरः गृहीत्वा राजधानीं प्रत्यागत्य महाराजाय प्रदर्शितवान् । महाराजः सन्तोषेण सुधीराय लक्षसुवर्णनाणकानि दत्तवान् । सुधीरः अपि दारिद्र्यात् विमुक्तः अभवत् । अरण्यवासिनः अपि कष्टविमुक्ताः सन्तः सन्तोषम् अनुभूतवन्तः ।

□□

# ३३. ज्ञानोदयः

• *बालकृष्ण मन्तिगेमने*

कस्मिंश्चित् राज्ये कश्चन महाराजः आसीत् । सः न केवलम् अविवेकी, विचारहीनः अपि । स्वस्य राज्ये विशिष्टं शासनं भवेत् इति तस्य विचारः । तदर्थं सः किमपि करोति स्म ।

'स्वस्य कोषागारं सर्वदा पूर्णमेव भवतु' इति तस्य महाराजस्य इच्छा । अतः देशस्य आयस्य वर्धनार्थं सः विनूतनम् उपायं चिन्तितवान् । वने स्थितान् सर्वान् अपि वृक्षान् कर्तयित्वा विक्रीतवान् । सर्वाणि ओषधिसस्यानि उत्पाट्य विक्रयणं कारितवान् । प्राणिनः अपि मारयित्वा, तेषां मांसस्य विक्रयणं कारयित्वा धनं सम्पादितवान् ।

तथापि महाराजस्य धनेच्छा न शान्ता । अतः सः नूतनाम् आज्ञां कृतवान् –''मम राज्ये कार्यसमर्थाः शक्तिमन्तः जनाः एव भवेयुः । तेषां गृहेषु निवसन्तः वृद्धाः, दुर्बलाः, अस्वस्थाः, विकलाङ्गाः, रोगिणः चापि तैः गृहात् निस्सारणीयाः । ते राज्यात् एव बहिः प्रेषणीयाः'' इति । 'तथा क्रियते चेत् राज्ये आहारपदार्थानां सञ्चयः भवति' इति तस्य विचारः ।

राजाज्ञा पालनीया एव खलु प्रजाभिः ! अनिच्छन्तः अपि केचन जनाः राजाज्ञां पालितवन्तः । अन्ये केचन तत् राज्यमेव त्यक्त्वा देशान्तरं गतवन्तः ।

गच्छता कालेन राज्ये प्राकृतिकविकोपः आरब्धः । अनावृष्टिः जाता । अत्रान्तरे महाराजः अपि वातरोगेण पीडितः अभवत् । तस्य निवारणार्थं राजवैद्यैः कृताः सर्वाः अपि चिकित्साः विफलाः जाताः । दिने दिने तस्य रोगः अधिकः जातः । अन्ते राजा राज्ये सर्वत्र डिण्डिमोद्घोषं कारितवान्

यत् ''यः मम रोगस्य निवारणं करिष्यति सः मन्त्री भविष्यति'' इति ।

तस्मिन् एव राज्ये गोपालः नाम कश्चन युवकः वैद्यः आसीत् । तस्य पिता अप वैद्यः एव । परन्त सः इदानीम् अतीव वृद्धः आसीत् । राजाज्ञानुसारं सः राज्यात् बहिः प्रेषणीयः आसीत् । परन्तु गोपालः उपायेन पितरम् एकस्मिन् रहस्यस्थाने रक्षित्वा तत्र एव तस्य कृते भोजनादिकं व्यवस्थापितवान् । परन्तु ग्रामे सर्वत्र 'पिता राज्यात् बहिः प्रेषितः' इत्येव वार्तां प्रसारितवान् ।

महाराजस्य रोगविषये डिण्डिमोद्घोषं श्रुत्वा गोपालः पितुः समीपं गतवान् । 'महाराजस्य कीदृशी चिकित्सा करणीया' इति सः तस्य मार्गदर्शनम् अपि प्राप्तवान् । अनन्तरं सः महाराजस्य सभाम् आगतवान् । महाराजं नमस्कृत्य निवेदितवान् -''महाराज ! भवतः रोगनिवारणस्य कश्चन उपायः अस्ति । परन्तु सः अतीव दुष्करः । यतः भवतः आज्ञानुसारं राज्ये स्थितानि सर्वाणि ओषधिसस्यानि नाशितानि सन्ति । तदभावे कथं वा ओषधिनिर्माणं कर्तुं शक्यते ?'' इति ।

महाराजः अतीव पश्चात्तापम् अनुभूतवान् । 'इतःपरम् ओषधिसस्यानि न उत्पाटनीयानि' इति सः मनसि एव निर्णयं कृतवान् । ततः गोपालं पृष्टवान् -''तर्हि मम रोगनिवारणं कथम् ?'' इति ।

गोपालः अपेक्षितानाम् ओषधिसस्यानाम् नामानि सूचयित्वा उक्तवान् -''यदि एतानि उपलभ्यन्ते तर्हि एव चिकित्सा कर्तुं शक्यते'' इति ।

महाराजः अन्यदेशेभ्यः तानि ओषधिसस्यानि आनाययितुं व्यवस्थां कृतवान् । तदर्थं सप्ताहात्मकः समयः गतः । तावता महाराजस्य रोगः इतोऽपि अधिकः जातः आसीत् । ओषधिसस्यानि यदा प्राप्तानि तदा गोपालः चिकित्साम् आरब्धवान् । अल्पेन एव कालेन महाराजः यथापूर्वं स्वस्थः जातः । तदनन्तरं सः प्रथमम् आज्ञां कारितवान् -''इतःपरम् अस्माकं राज्ये सर्वाणि अपि ओषधिसस्यानि सुरक्षितानि भवेयुः'' इति ।

'गोपालः युवकः वैद्यः । सः कथं स्वस्य रोगस्य चिकित्सां कर्तुं शक्तः जातः' इति महाराजस्य जिज्ञासा उत्पन्ना । अतः सः तम् आहूय पृष्टवान् -''गोपाल ! मम रोगः असाधारणः आसीत् । यतः राजवैद्याः अपि तस्य चिकित्सां कर्तुं न शक्ताः । एवं सति भवान् कथं तस्य चिकित्सां ज्ञातवान् ?'' इति ।

तदा 'महाराजस्य मनःपरिवर्तनार्थम् एषः एव सुसमयः' इति चिन्तयित्वा गोपालः उक्तवान् -''महाराज ! मम तु चिकित्सायाम् अधिकः अनुभवः नास्ति । परन्तु मम पिता तत्र महान् अनुभवी । सः इदानीम् अतीव वृद्धः अस्ति । सः स्वयं चिकित्सां न करोति । तथापि तस्य जीवनानुभवः चिकित्सानुभवः वा महान् अस्ति । तेन लोकस्य महान् उपकारः भविष्यति । अतः अहं राजाज्ञाम् उल्लङ्घ्य पितरं गृहे एव रक्षितवान् आसम् । अद्य तस्य कारणात् एव भवतः प्राणाः रक्षिताः'' इति ।

महाराजस्य विवेकः उदितः । सः 'मम राज्ये वृद्धाः, अस्वस्थाः, विकलाङ्गाः वा यथापूर्वं भवितुम् अर्हन्ति' इति आज्ञां कारितवान् । तदनन्तरं तस्य राज्ये सर्वेऽपि सुखेन जीवनं कृतवन्तः । गोपालः अपि महाराजस्य मन्त्री सन् दीर्घकालं जनहितकार्याणि साधितवान् ।

□□

# ३४. पापं कुर्वन्ति मानवाः

• *(सं) कोक्कड वेङ्कटरमणभट्टः*

कस्मिंश्चित् वृक्षे कश्चन कोकिलः वसति स्म । कश्चन शुनकः तस्य मित्रम् आसीत् । कष्टे सुखे च तौ सहभागिनौ सन्तौ जीवतः स्म ।

एकदा कस्यचित् धनिकस्य गृहे तस्य पुत्र्याः विवाहोत्सवः आसीत् । तत्र बहवः जनाः सम्मिलिताः आसन् । भोजनार्थं नानाविधानि भक्ष्यभोज्यानि सज्जीकृतानि आसन् । जनाः भोजनानन्तरं भोजनपत्रेषु बहूनि भक्ष्यभोज्यानि त्यक्तवन्तः। कर्मकरैः तानि बहिः क्षिप्तानि । तानि कोकिलशुनकौ आकण्ठं खादितवन्तौ ।

उदरपूरणकारणात् शुनकः जृम्भणं कर्तुम् आरब्धवान् । सः कोकिलम् उक्तवान् - ''मित्र ! निद्रा मां बाधते । अतः अहं मुहूर्तकं निद्रां करोमि ।''

एवम् उक्त्वा शुनकः मार्गस्य पार्श्वे निद्रां कर्तुम् आरब्धवान् । कोकिलः वृक्षम् आरुह्य ''कुहू कुहू'' इति गातुम् आरब्धवान् ।

तदा तेन एव मार्गेण कश्चन शकटः अभिमुखम् आगच्छन् आसीत् । शकटे तैलपूर्णानि पात्राणि आसन् । शकटचालकः आनन्देन वृषभं प्रेरयति स्म । आगच्छन्तं शकटं दृष्टवतः कोकिलस्य भयम् अभवत् यत् 'एषः मम मित्रस्य उपरि एव गच्छेत्' इति । अतः सः उक्तवान् - ''अयि भोः, महाशय ! मम मित्रं मार्गस्य पार्श्वे निद्रां कुर्वन् अस्ति । अतः कृपया जागरूकतया शकटं चालयतु'' इति ।

शाकटिकः कोकिलस्य वचनम् अनादृत्य शकटम् इतोऽपि वेगेन चालितवान् । ''मम मित्रं मा पीडयतु'' इति कोकिलः पुनः पुनः प्रार्थितवान् । तथापि सः उद्धतः शाकटिकः शकटं निर्दयं शुनकस्य उपरि चालितवान् । शुनकस्य पादयोः अस्थीनि भग्नानि अभवन् । सः वेदनया आक्रोशं कृतवान् । मित्रस्य दुरवस्थां दृष्ट्वा कोकिलः अतीव खिन्नः अभवत् । सः प्रतीकारं कर्तुं निश्चितवान् । सः शकटं वहतः वृषभस्य नेत्रद्वयं चञ्च्वा विदीर्णवान् । वेदनया अन्धीभूतः सः वृषभः यत्र कुत्रापि चलितुम् आरब्धवान् । क्रुद्धः शाकटिकः तं कशया ताडितवान् । सः वृषभः मार्गभ्रष्टः भूत्वा कस्मिंश्चित् गर्ते पतितः । शकटस्य उपरि स्थितानि तैलपात्राणि सर्वाणि पतितानि । तैलं सर्वं नष्टम् अभवत् । शाकटिकस्य पादयोः अपि व्रणाः जाताः ।

शाकटिकः विषादेन गृहं प्रतिनिवृत्तः । अत्रान्तरे गृहस्य छदस्य उपरि प्रसारिताः धान्यकणाः अपि कोकिलसमूहेन भक्षिताः आसन् । एवं सः शाकटिकः स्वेन कृतस्य अकार्यस्य फलं स्वयमेव अनुभूतवान् ।

□□

# ३५. निर्भीकः साहसिकः

• *(सं) उदयनाथ झा 'अशोकः'*

पुरा मिथिलाजनपदे 'छादन'-ग्रामे गिरीश्वरोपाध्यायः नाम कश्चन विद्वान् आसीत् । तस्य पुत्रस्य नाम आसीत् गङ्गेश्वरः । गङ्गेश्वरस्य बाल्ये एव तस्य पिता गिरीश्वरोपाध्यायः दिवङ्गतः । माता अपि वर्षाभ्यन्तरे एव दिवङ्गता । मातापित्रोः मरणानन्तरं गङ्गेश्वरस्य जीवनं मातुलस्य गृहे आरब्धम् । सः मातुलः धनिकः दयालुः च आसीत् । परन्तु तस्य पत्नी परमदुष्टा आसीत् । सा गङ्गेश्वरं बहुधा पीडयति स्म । बहु कष्टम् अपि ददाति स्म । सा स्वपुत्राय उत्तमं भोजनं ददाति स्म । परं गङ्गेश्वराय पर्युषितं किञ्चित् ददाति स्म । गङ्गेश्वरेण सह तस्याः वाग्व्यवहारः अपि समीचीनः न आसीत् ।

यद्यपि बालकः गङ्गेश्वरः सर्वेषां बालकानाम् अपेक्षया मन्दमतिः, तथापि सः निर्भीकः आसीत् । तस्मात् सर्वे बालकाः भीताः भवन्ति स्म । एकदा गङ्गेश्वरः मातुलान्याः पुरतः एव मातुलस्य सकाशे तस्याः दुर्व्यवहारविषये निर्भीकतया उक्तवान् । एतस्मात् कारणात् परिणामः तु सुखकरः जातः । पत्युः भीत्या तदनन्तरं सा गङ्गेश्वरस्य विषये तादृशं व्यवहारं न कृतवती । परन्तु तस्याः हृदये प्रतीकारस्य भावना धूमावृतः अग्निः इव ज्वलन्ती एव आसीत् ।

एकदा ग्रामे कश्चन दिवङ्गतः । तद्दिने दुरदृष्टवशात् गङ्गेश्वरस्य मातुलः अपि ग्रामे न आसीत् । यथापूर्वं दिनम् अतीतम् । रात्रिः आगता । मध्यरात्रे गङ्गेश्वरस्य मातुलानी गङ्गेश्वरम् उक्तवती – ''यदि भवान् निर्भीकः अस्ति, साहसिकः अस्ति, तर्हि श्मशानं गत्वा चिताग्निम् आनयतु'' इति ।

बालकः गङ्गेश्वरः किङ्कर्तव्यतामूढः सन् तत्रैव स्थितवान् । अनन्तरं तस्याः ताडनस्य भयेन, अनन्यगतिकतया च श्मशानं प्रति प्रस्थितवान् । मार्गे गमनसमये भीतिनिवारणार्थं 'तारा, तारा, राता रता....' इति किमपि उच्चैः वदन् श्मशानं प्रविष्टवान् ।

तत्र चितायाः अग्निं स्वीकृत्य सः प्रत्यागन्तुम् उद्युक्तः अभवत् । तदा तस्य मनसि 'मया सह काचित् अदृश्यशक्तिः अस्ति' इति अभासत । सः सर्वत्र अवलोकनं कृतवान् । अहो आश्चर्यम् ! तस्य पार्श्वे एव देवी तारा हसन्ती स्थितवती आसीत् । तां दृष्ट्वा विस्मितः गङ्गेश्वरः तस्याः चरणयोः साष्टाङ्गप्रणामं कृतवान् । तस्याः दर्शनेन बालकस्य तस्य मुखात् एकः अपि शब्दः न निःसृतः । तस्य मुग्धतां, निर्भीकतां च दृष्ट्वा सा देवी सन्तुष्टा अभवत् । ततः प्रसन्ना सा तम् अङ्के उपवेश्य दुग्धं पाययित्वा अन्तर्हिता अभवत् ।

दुग्धपानस्य प्रभावात् गङ्गेश्वरस्य शरीरे कस्याश्चित् शक्तेः सञ्चारः जातः । तस्य बुद्धिः अपि तीक्ष्णा जाता । हस्ते चिताग्निं गृहीत्वा यदा सः श्मशानतः गृहम् आगतवान् तदा तस्य मातुलः अपि गृहं प्रति

प्रत्यागतवान् आसीत् । मध्यरात्रे गृहम् आगच्छन्तं गङ्गेश्वरं दृष्ट्वा मातुलः पृष्टवान् - ''भवान् कुतः आगच्छन् अस्ति ?'' इति ।

गङ्गेश्वरः मातुलान्या आदिष्टं कार्यम् उक्तवान् । बालकस्य कथनं श्रुत्वा सः कोपेन पत्नीं ताडितवान् । अपि च बालकम् - ''भोः मूर्ख ! भवान् गौः अस्ति'' इति उक्तवान् । सः शब्दः पुरा अपि बहुवारं मातुलस्य मुखात् गङ्गेश्वरेण श्रुतः आसीत् । तदा सः तं श्रुत्वा अपि तूष्णीं तिष्ठति स्म । इदानीं तु सः सामान्यः बालकः न, देव्याः वरं प्राप्तवान् आसीत् । अतः मातुलस्य वचनं श्रुत्वा सः अनुपदम् एवम् उक्तवान् -

*किं गवि गोत्वमुतागवि गोत्वं चेद् गवि गोत्वमनर्थकमेतत् ।*

*भवेदभिलषितमगोरपि गोत्वं भवतु भवत्यपि सम्प्रति गोत्वम् ।। इति ।*

(किं भवान् गवि (धेन्वाम्) गोत्वम् वदति, उत अगवि गोत्वं वदति ? यदि गवि गोत्वं वदति तर्हि तत् अनर्थकमेव । यतः तत् स्वयं सिद्धम् । यदि अगोः (गोभिन्नस्य) अपि गोत्वं वदति तर्हि तत् न केवलं मयि, अपि तु भवति अपि अस्ति एव ।)

गङ्गेश्वरस्य तर्कसहितं पद्यं श्रुत्वा मातुलः विस्मितः अभवत् । मन्दमतौ बालके जातं परिवर्तनं दृष्ट्वा सः प्रमुदितः अभवत् ।

अयमेव बालकः पश्चात् 'गङ्गेश उपाध्यायः' इति नाम्ना प्रसिद्धः अभवत् । तत्त्वचिन्तामणिकारः इत्यपि सः विख्यातः अभवत् ।

□□

# ३६. सत्यं ब्रूयात् प्रियं ब्रूयात्

• सं गङ्गारामशर्मा

कस्मिंश्चित् राज्ये कश्चन महाराजः आसीत् । शकुनादिषु तस्य महान् विश्वासः । सः सन्तोषेण राज्यं परिपालयति स्म ।

एकदा सः महाराजः रात्रौ भूरिभोजनं कृत्वा ताम्बूलसेवनं च कृत्वा निद्रामग्नः आसीत् । निद्रायां

सः कश्चित् स्वप्नं दृष्टवान् । तस्मिन् स्वप्ने सः दृष्टवान् यत् स्वस्य मुखे स्थितेषु दन्तेषु एकं विहाय अन्ये सर्वे अपि दन्ताः पतिताः सन्ति ।

परेद्यवि प्रातःकाले उत्थाय महाराजः कश्चित् पण्डितम् आहूतवान् । तस्मै स्वप्नवृत्तान्तं निवेदितवान् । ततः - ''एतस्य स्वप्नस्य आशयः कः?'' इति तं पृष्टवान् ।

पण्डितः किञ्चित्कालं विचिन्त्य उक्तवान् - ''महाराज ! भवतः स्वप्नस्य आशयः अयम् अस्ति यत् भवतः सर्वाणि अपि मित्राणि भवतः मरणात् पूर्वमेव मरणं प्राप्स्यन्ति'' इति ।

एतत् श्रुत्वा महाराजः कुपितः अभवत् । सः तं पण्डितं कारागृहं प्रेषितवान् ।

तदनन्तरं महाराजः स्वस्य अमात्यम् आहूतवान् । तम् अपि स्वप्नवृत्तान्तम् उक्तवान् । ''स्वप्नस्य आशयः कः?'' - इति पृष्टवान् च ।

अमात्यः अतीव चतुरः । सः विचिन्त्य उक्तवान् -''राजन् ! शुभसूचकः स्वप्नः अस्ति एषः । एतस्य आशयः अस्ति यत् भवान् भवतः मित्राणाम् अपेक्षया दीर्घकालं जीविष्यति, भवान् अतीव दीर्घायुष्मान् अस्ति'' इति ।

अमात्यस्य वचनं श्रुतवतः महाराजस्य महान् सन्तोषः जातः । तस्मै प्रभूतं धनम् उपायनं च दत्त्वा सः तं सत्कृतवान् ।

प्रवृत्तं सर्वं ज्ञात्वा पण्डितः आश्चर्यचकितः जातः। सः महाराजं पृष्टवान् - ''राजन् ! मम अमात्यस्य च कथनस्य आशयः समानः एव । तथापि किमर्थं मम कृते कारागृहवासः दत्तः, अमात्यस्य च कृते उपायनम् दत्तम् ?'' इति ।

तदा महाराजः उक्तवान् - ''सत्यं ब्रूयात्, प्रियं ब्रूयात् ।''

□□

# ३७. भक्तिः इष्टा, न विभक्तिः

• *(सं) प. पद्मनाभः*

केरलप्रदेशे अङ्गाटिपुरं नाम कश्चन ग्रामः आसीत् । तत्र पून्तानं नम्बूदिरिः इति कश्चन निवसति स्म । सः न पण्डितः, परं महान् भक्तः । भगवतः आराधनेन एव सः जीवनं यापयति स्म । बहुकालपर्यन्तं तस्य अपत्यमेव न आसीत् ।

कानिचन वर्षाणि अतीतानि । भगवतः कृपया पून्तानस्य पत्नी पुत्रं प्रसूतवती । दम्पत्योः आनन्दस्य सीमा एव न आसीत् ।

बालः यदा एकवर्षीयः जातः तदा पून्तानं तस्य अन्नप्राशनकार्यक्रमम् आयोजितवान् । तदर्थं ग्रामजनाः सर्वे बान्धवाश्च निमन्त्रिताः आसन् । बहवः आगताः अपि ।

अन्नप्राशनमुहूर्तः रात्रौ आसीत् । सायङ्काले रुदन्तं शिशुं पून्तानस्य पत्नी एकस्मिन् प्रकोष्ठे कोणे शायितवती । शिशुः तत्रैव निद्रामग्नः अभवत् ।

रात्रौ गृहम् आगताः केचन बान्धवाः अतिथयश्च तम् एव प्रकोष्ठं गत्वा तत्र स्ववस्त्रभाण्डादिकं तस्मिन् एव कोणे स्थापितवन्तः, यत्र सः शिशुः शयानः आसीत् । मन्दप्रकाशे तैः शिशुः न लक्षितः एव । अतः बहूनि वस्तूनि शिशोः उपरि एव स्थापितानि अभवन् ।

मुहूर्तः सन्निहितः । माता पुत्रं नेतुं प्रकोष्ठम् आगतवती । परं हा हन्त ! किं पश्यति सा तत्र, शिशुः वस्त्रबन्धानाम् अधः अस्ति ! झटिति सर्वम् अपसार्य सा शिशुम् उन्नीतवती । अहो, तावता सः शिशुः मृतः एव आसीत् । तत् ज्ञात्वा सा मूर्च्छावस्थां प्राप्तवती । आगताः सर्वेऽपि जनाः दुःखेन प्रतिगतवन्तः ।

पुत्रस्य मरणानन्तरं पून्तानं सर्वदा ध्यानं जपं च कुर्वन् देवसेवायाम् एव सम्पूर्णतया मग्नः अभवत् । अधिकतया सः गुरुवायूरुग्रामे एव कालं यापितवान् ।

तस्मिन् एव समये पून्तानं 'सन्तानगोपालः' इति ग्रन्थं रचितवान् । परं स्वस्य व्याकरणज्ञानं नास्ति इति सः जानाति स्म । 'नारायणीय'ग्रन्थस्य कर्ता भट्टतिरिः तदा अतीव सुप्रसिद्धः आसीत् । अतः पून्तानं स्वकीयं ग्रन्थं परिशोधनाय भट्टतिरेः समीपं नीतवान् ।

महापण्डितः भट्टतिरिः तस्य ग्रन्थम् अदृष्ट्वा एव तम् उपहसन् उक्तवान् - ''भोः, भवतः भाषाज्ञानं नास्ति, व्याकरणज्ञानं तु सर्वथा नास्ति एव । अतः भवता लिखितं सर्वम् अशुद्धम् एव भवति । तस्य दर्शनेन किं प्रयोजनम् ?'' इति ।

भट्टतिरेः वचनात् अपमानितः पून्तानं लज्जया खेदेन रोदनम् आरब्धवान् । तावति काले अशरीरवाणी श्रुता - ''भोः ! भट्टतिरेः विभक्तेः अपेक्षया पून्तानस्य 'भक्तिः' एव मम इष्टा'' इति । एतेन लज्जितः भट्टतिरिः पून्तानं क्षमां प्रार्थितवान् । ततः बहुकालपर्यन्तं पून्तानं गुरुवायूरु-क्षेत्रे जीवनं कृत्वा अन्ते भगवतः सान्निध्यं प्राप्तवान् ।

□□

# ३८. अपकारिभ्यः अपि उपकारः

• *सं. सावित्री रामकृष्ण*

कस्मिंश्चित् अरण्ये कश्चन व्याधः आसीत् । सः प्रतिदिनम् अरण्ये मृगयां करोति स्म । मृगाणां मांसं, चर्म च विक्रीय जीवनं करोति स्म ।

एकदा अरण्यं गतः व्याधः तत्र मार्गभ्रष्टः अभवत् । यावत् अटितवान् चेदपि सः मार्गं न ज्ञातवान् । इतस्ततः अटने एव सायङ्कालः जातः । तदा अकस्मात् कुतश्चित् आगतः कश्चन व्याघ्रः व्याधस्य मार्गम् अवरुद्धवान् । भीतः व्याधः तत्रैव समीपे विद्यमानं कञ्चित् वृक्षम् आरूढवान् ।

वृक्षस्य शाखायां कश्चन भल्लूकः उपविष्टः आसीत् । तं दृष्ट्वा व्याधः कम्पमानः किङ्कर्तव्यतामूढः सन् तत्रैव शाखायाम् उपविष्टवान् । तदा भल्लूकः व्याधं सान्त्वयन् - ''भोः मित्र ! भीतः न भवतु । अहं भवतः रक्षणं करोमि'' इति उक्तवान् ।

व्याधः भल्लूकः यत्र उपविष्टवान् आसीत् तस्याः शाखायाम् एव उपविष्टवान् । तदा भल्लूकः "इदानीं भवान् निश्चिन्ततया निद्रां करोतु । अहं रक्षणं करोमि । एकस्य यामस्य अनन्तरम् अहं निद्रां करोमि । भवान् रक्षणं करोतु" इति उक्तवान् । व्याधः निद्रां कृतवान् ।

चन्द्रकिरणाः सर्वत्र प्रसृताः आसन् । वृक्षस्य अधः व्याघ्रः व्याधस्य प्रतीक्षायाम् एव आसीत् । सः भल्लूकम् उक्तवान् –"भोः मित्र ! आवां मृगौ । अयं व्याधः तु अस्माकं मृगाणां वैरी । भवान् इदानीं तस्य रक्षणं करोति चेदपि श्वः सः भवन्तं मारयेत् । अतः तम् अधः पातयतु" इति ।

भल्लूकः उक्तवान् – "मित्र ! यदि शरणागतं मुञ्चामि तर्हि इहलोके अपख्यातिः भवेत् । परलोकेऽपि दुर्गतिः भवेत् । अतः एनं न मुञ्चामि" इति ।

कश्चन कालः अतीतः । व्याधः जागरितः । इदानीं भल्लूकः निद्रां कृतवान् । तदा व्याघ्रः व्याधम् उक्तवान् – "रे मूढ ! मत्तः भीतः भवान् भल्लूकं शरणं गतवान् किम् ? सः भवतः शत्रुः । मम निर्गमनम् एव सः प्रतीक्षते । तदनन्तरं भवन्तं मारयति । अतः तस्य जागरणात् पूर्वमेव भवान् तम् अधः पातयतु" इति ।

व्याघ्रस्य वचनं श्रुत्वा कृतघ्नः व्याधः निद्रामग्नं भल्लूकम् अधः पातितवान् । भल्लूकः तु पतनसमये जागरितः सन् काञ्चित् शाखाम् अवलम्ब्य वृक्षम् आरुह्य यथापूर्वम् उपविष्टवान् ।

पुनः आरूढवन्तं भल्लूकं दृष्ट्वा व्याधः भयेन कम्पते स्म । तदा भल्लूकः उक्तवान् – "व्याध ! भयं मास्तु । यद्यपि भवान् कृतघ्नः, तथापि अहं भवन्तं न मारयामि" इति ।

तत् दृष्ट्वा व्याघ्रः उक्तवान् – "भवान् तस्मै रक्षणं दत्तवान् चेदपि सः भवन्तम् एव मारयितुम् उद्युक्तः । अतः तं कृतघ्नम् अधः पातयतु" इति ।

तदा भल्लूकः समाधानेन उक्तवान् – "सखे ! दुर्जनेभ्यः अपकारिभ्यः च विवेकिनः न कुप्येयुः, न वा प्रतिविधानम् आचरेयुः । अपकारिभ्यः अपि उपकारः एव कर्तव्यः इति नीतिः अस्ति । अहम् एतं न मुञ्चामि" इति ।

ततः व्याघ्रेण बहुधा प्रार्थितः अपि सः तद्वचनम् अवधीर्य प्रभातपर्यन्तं व्याधं रक्षितवान् ।

□□

# ३९. कृपणस्य बोधः

• (सं) श्रीनाथधर द्विवेदी

वीरपुरं नाम कश्चन ग्रामः । तत्र कश्चन कृपणः निवसति स्म । तस्य कृपणता अतीव प्रसिद्धा । सः भोजनसमये अपि द्वारं पिधाय भोजनं करोति स्म । यतः तदा कोऽपि आगच्छति चेत् तस्मै भोजनं दातव्यम् आपतेत् इति ।

एकदा कृपणः भोजनं कुर्वन् आसीत् । तस्मिन् समये सः द्वारस्य पिधानं कर्तुं विस्मृतवान् आसीत् । तदा एव कश्चन भिक्षुकः तत्र आगतवान् । सः कृपणं दृष्ट्वा - ''पुत्र ! महती बुभुक्षा अस्ति । एकां रोटिकां ददातु'' इति प्रार्थितवान् ।

कृपणः भोजनं त्यक्त्वा उत्थितवान् । तं भिक्षुकं निवर्तयितुं प्रयासं कृतवान् । किन्तु भिक्षुकः न गतवान् । कृपणः 'एतस्यै किमपि दत्त्वा इतः शीघ्रं प्रेषयामि' इति चिन्तयन् भिक्षुकाय रोटिकार्धं दातुम् उद्युक्तः अभवत् ।

किन्तु भिक्षुकः रोटिकां न स्वीकृतवान् । अपि च सः उक्तवान् - ''यदि भवान् पूर्णां रोटिकां दास्यति तर्हि एव अहम् इतः गमिष्यामि'' इति । कृपणः रोटिकां न दत्तवान् । भिक्षुकः तत्रैव उपविष्टवान् । कृपणः भोजनं कृत्वा स्वकार्यार्थं गतवान् ।

सायङ्काले कृपणः यदा गृहम् आगतवान् तदा द्वारे तथैव उपविष्टवन्तं भिक्षुकं दृष्टवान् । झटिति अन्तः गत्वा एकां रोटिकाम् आनीय - ''एतां स्वीकृत्य इतः गच्छतु । पुनः अत्र न आगच्छतु'' इति भिक्षुकम् उक्तवान् ।

तदा भिक्षुकः तत् निराकुर्वन् - ''इदानीम् एकया रोटिकया कार्यं न भवति । यदि भवान् रोटिकाद्वयं दास्यति तर्हि एव इतः गमिष्यामि । यतः इदानीं भोजनस्य द्वितीयः अवसरः अस्ति'' इति उक्तवान् ।

भिक्षुकस्य वचनं श्रुत्वा कृपणः दृढस्वरेण - ''अहम् एकाम् एव रोटिकां दास्यामि'' इति उक्तवान् । किन्तु भिक्षुकः निराकृतवान् । कृपणः रोटिकाद्वयं न दत्तवान् । सः रात्रिभोजनं कृत्वा द्वारं पिधाय शयनं कृतवान् ।

प्रातःकालः अभवत् । कृपणः उत्थाय द्वारम् उद्घाटितवान् । तदा अपि भिक्षुकः द्वारे एव उपविष्टवान् आसीत् । कृपणस्य भीतिः आरब्धा । 'यदि एषः भिक्षुकः मरणं प्राप्नोति तर्हि मम कष्टम् एव । जनाः अपि मां निन्देयुः' इति । एवं विचिन्त्य सः तस्मै रोटिकाद्वयं दातुम् उद्युक्तः अभवत् । किन्तु भिक्षुकः तत् निराकुर्वन् उक्तवान् - ''इदानीं भोजनस्य तृतीयः अवसरः अस्ति । अतः भवता तिस्रः रोटिकाः दातव्याः । नो चेत् अहं न गमिष्यामि'' इति ।

किन्तु कृपणः तिस्रः रोटिकाः न दत्तवान् । भिक्षुकः अपि न निर्गतवान्

चतुर्थं दिनम् आगतम् । भिक्षुकः बुभुक्षया पिपासया च तत्रैव उपविष्टवान् । तदा कृपणः किङ्कर्तव्यतामूढः सन् तिस्रः रोटिकाः आनीय तस्य पुरतः स्थापितवान् ।

तदा भिक्षुकः उक्तवान् - ''एतेन कार्यं न भविष्यति । अत्र एकः कूपः निर्मितः भवेत्, तदा एव इतः मम निर्गमनम्'' इति ।

भिक्षुकस्य वचनं श्रुत्वा कृपणः किञ्चिदिव व्यग्रः अभवत् । उच्चस्वरेण - ''भोः भिक्षुक ! किं

वदति भवान् ? कूपस्य खननं सुकरम् इति चिन्तितवान् वा ? तन्निमित्तं कियान् व्ययः करणीयः भवति ! तावत् धनं मम समीपे नास्ति । असम्बद्धं किमपि न वदतु । रोटिकाः स्वीकृत्य निर्गच्छतु इतः'' इति उक्तवान् ।

किन्तु भिक्षुकः न गतवान् । कृपणः स्वकार्यार्थं गतवान् । किन्तु तस्य मनः कार्ये न लगति स्म । भिक्षुकस्य चित्रम् एव पुरतः आगच्छति स्म । अन्ततो गत्वा सः गृहम् आगत्य भिक्षुकस्य समीपं गत्वा– ''भोः महाशय ! भवतः इच्छां पूरयामि । चलतु भवान्, भोजनं करोतु'' इति उक्तवान् ।

भिक्षुकः उक्तवान् – ''एकेन कूपेन कार्यं न भवति । कूपद्वयं निर्मातव्यम्'' इति ।

कृपणः तत् अङ्गीकृतवान् । नो चेत् प्रति-अवसरं कूपसंख्या वर्धेत इति तस्य भयम् आसीत् ।

द्वित्रदिनाभ्यन्तरे कृपणस्य गृहस्य पुरतः कूपद्वयं निर्मितम् । सम्यक् जलम् अपि आगतम् । तदा भिक्षुकः कृपणम् – ''अहम् एकवर्षानन्तरम् अत्र आगमिष्यामि । तस्मिन् समये यदि मम कूपस्य जलं न्यूनं भविष्यति, तर्हि अहम् अन्यस्य कूपस्य निर्माणं कारयिष्यामि । जागरूकः भवतु'' इति उक्त्वा ततः निर्गतवान् ।

भिक्षुकस्य वचनानि एव मनसि आकलयन् कृपणः चिन्तितवान् – 'अहं तस्य कूपस्य जलं न उद्धरामि एव । मम कूपस्य जलस्य उपयोगमेव कर्तुं ग्रामजनान् सूचयामि । तदा मम कूपे जलं न्यूनं भवति । भिक्षुकस्य कूपस्य जलं न्यूनं न भवति एव'' इति । ततः सः भिक्षुकस्य कूपस्य उपरि आवरणं निर्मापितवान् ।

वर्षम् अतीतम् । एकस्मिन् दिने भिक्षुकः आगतवान् । तं दृष्ट्वा कृपणः गर्वेण – ''इदानीं भवान् स्वकूपस्य मम कूपस्य च जलपरिमाणं पश्यतु । मम कूपे न्यूनं जलम् अस्ति'' इति उक्त्वा एकं दण्डं स्वीकृत्य कूपद्वयस्य जलपरिमाणस्य मापनं कृतवान् ।

किन्तु अहो आश्चर्यम् ! कृपणस्य कूपे एव अधिकं जलम् आसीत् । कृपणः दिङ्मूढः सन् उक्तवान् – ''भवतः कूपः आच्छादितः आसीत् । मम कूपात् तु ग्रामजनाः सर्वे अपि जलं नयन्ति स्म । तथापि मम कूपे कथम् अधिकं जलम् अस्ति ? कथं भवतः कूपे न्यूनम् अस्ति ?'' इति ।

कृपणस्य वचनं श्रुत्वा भिक्षुकः मन्दं हसन् – ''भोः मित्र ! भवान् गम्भीरतया विचारं करोतु । यस्य उपयोगः अधिकतया क्रियते तत् वर्धते । दानेन वृद्धिः एव भवति, न हानिः'' इति उक्त्वा ततः निर्गतवान् ।

□□

# ४०. साधनबुद्धिः

• *रवीन्द्रनाथगुरुः*

नेपोलियनः जगद्विख्यातः मेधावी । 'वीराणां शब्दकोषे 'असम्भव'शब्दः एव नास्ति' इति घोषितवान् आसीत् सः । तस्य मातुः नाम लटेसिया इति । यदा नेपोलियनः बाल्यकाले अध्ययननिरतः आसीत् तदा प्रवृत्ता घटना एषा ।

एकदा सूर्यः अस्तङ्गतः चेदपि, विद्यालयं गतः नेपोलियनः न प्रत्यागतः । एतत् दृष्ट्वा माता व्याकुलचित्ता जाता । अन्धकारप्रसारस्य अनन्तरम् अपि पुत्रः न आगतः एव । पुत्रस्य आगमनस्य निरीक्षया श्रान्ता सा शिक्षकस्य गृहं गतवती । महान्तम् आतङ्कं प्रकटितवती च ।

सर्वं श्रुत्वा शिक्षकः अपि लटेसियया सह विद्यालयं गतवान् । सर्वत्र नेपोलियनम् अन्विष्य अप्राप्य अन्ते प्रवचनमन्दिरस्य द्वारम् उद्घाटितवान् सः । तत्र दीर्घपीठस्य उपरि उपविष्टः एव निद्रामग्नः नेपोलियनः ताभ्यां दृष्टः । आगतानां पादध्वनिं श्रुत्वा नेपोलियनः जागरितः अभवत् । अध्यापकः तस्य समीपं गत्वा गम्भीरस्वरेण पृष्टवान् - ''किम् इयं ते अवस्था ?'' इति ।

तदा नेपोलियनः उक्तवान् - ''गुरुवर्य ! अद्य प्रातः भवता एका गणितसमस्या दत्ता आसीत् खलु ? तस्याः उत्तरं केनापि ज्ञातुं शक्तं न आसीत् । सहपाठिनः सर्वे माम् उक्तवन्तः - ''अये मेधाविन् ! 'भवान् अस्ति गुरोः प्रियशिष्यः। 'भवान् प्रतिभाशाली' इति गुरुः सर्वदा भवतः श्लाघनं करोति । अतः एतस्याः समस्यायाः समाधानम् अवश्यं साधनीयं भवता इति । तत् चिन्तयन् अहम् अत्रैव उपविष्टवान् । चिन्तनमग्नः अहं द्वारपिधानम् अपि न लक्षितवान् । इदानीं तस्याः समस्यायाः उत्तरं साधितम् अस्ति मया'' इति । ततः सः स्वकीयम् उत्तरपुस्तकम् अध्यापकस्य पुरतः गृहीतवान् ।

युक्तम् उत्तरं दृष्ट्वा सन्तुष्टः अध्यापकः तं श्लाघमानः - ''भवतः साधनबुद्धिः नितरां श्लाघ्या । भवान् अग्रे विश्वविख्यातः भविष्यति'' इति उक्तवान् ।

□□

# ४१. बुद्धिर्यस्य बलं तस्य

• नटवर साहुः

कश्चन ग्रामः आसीत् । तत्र कपिलः नाम अजपालकः आसीत् । सः प्रतिदिनं प्रातः अजान् चारयितुम् अरण्यं नयति, सायङ्काले गोष्ठम् आनयति च ।

कपिलस्य अजेषु कश्चन दुष्टः अजशावकः आसीत् । सः सर्वदा अजसमूहात् दूरं गत्वा अरण्ये विहारं कर्तुम् इच्छति । तस्य माता सर्वदा तं निवारयति, वदति च - ''वत्स ! एकाकी अरण्यं मा गच्छतु । तत्र हिंस्त्राः वृकाः शृगालाश्च सन्ति । ते भवन्तं मारयन्ति'' इति ।

एवं मात्रा बहुवारं बोधितः अपि सः अजशावकः कदाचित् कपिलः अपि यथा न जानाति तथा अरण्यं प्राविशत् एव । अरण्ये सर्वत्र हरिद्वर्णानि तरुलतादीनि दृष्टवतः तस्य आनन्दः वर्णनातीतः आसीत् । सः सन्तोषेण 'मेँ मेँ' इति शब्दं कुर्वन् अग्रे गतवान् ।

तदा एव कश्चन महाकायः वृकः पुरतः आगतवान् । तस्य दर्शनेन एव अजशावकः भीतः अभवत् । मातुः वचनानि स्मरन् सः 'इदानीमेव मम मरणं भवति' इति निश्चितवान् । तथापि कथमपि आत्मरक्षणस्य प्रयत्नं करोमि इति विचिन्त्य एकम् उपायं कृतवान् ।

तस्य शरीरं भीत्या स्वयमेव कम्पते स्म । सः तत् इतोऽपि वेगेन कम्पयन् 'मेँ मेँ ...' इति उच्चैः क्रन्दन् कर्तितः वृक्षः इव अधः न्यपतत् । तस्यामेव अवस्थायां सः - ''भोः भ्रातरः ! केऽपि मह्यं जलं यच्छन्तु । मया अज्ञानेन विषपर्णानि खादितानि । मम शरीरं विषमयं जातम् । कण्ठः शुष्कः जायते । मम पुरतः एव तानि विषपर्णानि खादित्वा अन्यः अजः मृतः एव । मृतस्य तस्य शरीरात् मांसं खादितुम् उद्युक्तः काकः अपि चञ्चुस्पर्शमात्रेण एव मृतः । ममापि सर्वम् अङ्गम् इदानीं विषमयं जातम् । अहं म्रिये... । केऽपि साहाय्यं कुर्वन्तु...'' इति वदन् निश्चेष्टः सन् अतिष्ठत् ।

तद् दृष्ट्वा सः वृकः अचिन्तयत् - 'यदि एतस्य मांसं खादामि तर्हि अहमपि मृतः भविष्यामि । दैवात् एषः विषयः मया पूर्वमेव ज्ञातः । अतः रक्षितः अहम् ।' एवं चिन्तयित्वा सः ततः अधावत् ।

वृकस्य गमनानन्तरम् अजशावकः शनैः नेत्रे उन्मील्य, परितः दृष्ट्वा शीघ्रमेव धावनं कुर्वन् गोष्ठं प्राप्नोत् । पुनः कदापि सः मातुः वचनं न उपेक्षितवान् ।

□□

# ४२. अन्नदातुः वृत्तिः

*• म. वि. कोल्हटकर्*

कस्मिंश्चित् ग्रामे कश्चन सत्पुरुषः आसीत् । सः भिक्षाटनं कृत्वा जीवनं यापयति स्म । सः प्रतिदिनं तपः करोति स्म । अतः तस्य मनः निर्मलं, शान्तं च आसीत् । तपसः कारणतः सः अन्येषां मनसः भावनां ज्ञातुं शक्नोति स्म ।

एकदा सत्पुरुषेण कश्चन प्रवासः कृतः । मध्येमार्गं सः श्रान्तः । पिपासितः अपि अभवत् । सः समीपे एकं कुटीरं पश्यति । तत्र गच्छति च ।

सत्पुरुषः कुटीरस्वामिनं जलं याचते । स्वामी जलं ददाति । किन्तु तेन दत्तं जलं पीत्वा सत्पुरुषः प्रसन्नः न अभवत् । सः ततः शीघ्रं प्रस्थातुम् इष्टवान् ।

तदा स्वामी उक्तवान् - ''किञ्चित् क्षीरं पीत्वा गच्छतु भवान्'' इति ।

सत्पुरुषः उक्तवान् - ''धन्यवादः । अहं क्षुधितः नास्मि । अतः गन्तुम् अनुमतिं ददातु'' इति ।

'कृपया क्षणम् उपविशतु । दुग्धम् आनयामि । मम आतिथ्यं स्वीकृत्य एव गच्छतु' इति उक्त्वा स्वामी अन्तः गत्वा चषकेण क्षीरम् आनीय सत्पुरुषाय दत्तवान् ।

क्षीरं पातुं सत्पुरुषस्य मनः न अङ्गीकरोति । तस्य मनसः किञ्चिदिव अस्वस्थता भवति । सः क्षीरस्य चषकं न स्पृशति ।

स्वामी पुनः पुनः अनुरोधं कृतवान् । स्वामिनः अनुरोधकारणतः सत्पुरुषः अनिवार्यतया क्षीरं पातुं चषकं गृहीतवान् । चषकतः चमसपरिमितमेव क्षीरं हस्ते स्वीकृत्य पीतवान् ।

क्षीरपानस्य अनुक्षणं सत्पुरुषः स्वामिनं

पृच्छति – "कुटीरस्य पार्श्वे भवतः धेनुः अस्ति किम् ?" इति ।

"आम्"- उत्तरं ददाति स्वामी ।

"कृपया मह्यं तां दर्शयति वा ?" – सत्पुरुषः निवेदनं कृतवान् ।

स्वामी तत् अङ्गीकृत्य सत्पुरुषं कुटीरस्य पार्श्वस्थं गोष्ठं नीतवान् । तत्र बद्धां धेनुं दर्शितवान् च ।

सत्पुरुषः धेनुं, तस्याः कण्ठे स्थितां रज्जुं, धेन्वाः बहिः गमनमार्गं चापि पश्यति । पुनः पुनः तानेव अवलोकते । तस्य मनः विचलितं भवति ।

तदा स्वामी पृष्टवान् – "किं जातम् ? किं चिन्तयति भवान् ?" इति ।

सत्पुरुषः उक्तवान् – "किमपि न" इति ।

स्वामी पुनः पष्टवान् – "भवान् चिन्तामग्नः इव दृश्यते । चिन्तायाः कारणं किम् ? वदतु भवान्" इति ।

सत्पुरुषः – "यदि ज्ञातुम् इच्छति, तर्हि सत्यं वदामि" इति उक्तवान् ।

स्वामी उक्तवान् – "वदतु, अवश्यं वदतु, निस्सङ्कोचं वदतु" इति ।

सत्पुरुषेण उक्तं – "क्षन्तव्यः अहम् । एषा धेनुः भवतः न ।"

तत् श्रुत्वा कुपितः स्वामी पृष्टवान् – "किं वदति भवान् ?" इति ।

सत्पुरुषः दृढस्वरेण उक्तवान् – "कोपं मा करोतु । निश्चयेन एषा धेनुः भवदीया न । एषा भवता कुतश्चित् चोरिता अस्ति । नास्ति तत्र कोऽपि सन्देहः" इति ।

यद्यपि स्वामी कुपितः भवति, तथापि तस्य मुखे निस्तेजस्कता दृश्यते । तस्य स्वरः कम्पमानः भवति । दृष्टिः चञ्चला जायते ।

सत्पुरुषः तीक्ष्णया दृष्ट्या स्वामिनः नेत्रे दृष्टवान् ।

अधोमुखः सञ्जातः स्वामी उक्तवान् – " सत्यम्, एषा धेनुः मया चोरिता अस्ति ।"

ततश्च सः पृष्टवान् – "हे साधो, एतां वस्तुस्थितिं भवान् कथं ज्ञातवान् ?" इति ।

सत्पुरुषः उक्तवान् – "भवता दत्तं क्षीरं यदा मया चमसपरिमितमेव पीतम् अनुक्षणं मम मनसि किञ्चित् आन्दोलनम् आरब्धम्, 'भवतः धेनुः चोरयितव्या' इति । तेन उद्देशेन प्रभावितः अहं धेनुं द्रष्टुम् इष्टवान् । तेनैव उद्देशेन मया धेनुः, तस्याः बन्धनरज्जुः, गोष्ठतः गमनमार्गः च सूक्ष्मतया द्रष्टाः । यावत् चौर्यवाञ्छा प्रबला भवेत् तावता एव इतः गन्तुम् इच्छामि । अनुमतिं ददातु" इति ।

"गच्छतु, गच्छतु भवान् । तथापि अन्ते एकः प्रश्नः – एषा चोरिता धेनुः इति कथं ज्ञातं भवता ?" इति स्वामी अपृच्छत् ।

"ईश्वरस्य कृपा । यदा अन्नं स्वीकरोमि तदा एव मनसि विशिष्टाः तरङ्गाः उद्भवन्ति । तैः तरङ्गैः अन्नदातुः वृत्तिं जानामि । अन्नदातुः वृत्तिः अन्नम् आरूढा भवति" इति अवदत् सत्पुरुषः ।

स्वामी पश्चात्तापम् अनुभूय सत्पुरुषं वन्दित्वा उक्तवान् – "मया पापम् आचरितम् । चोरितां धेनुम् अद्य एव प्रतिदास्यामि तस्याः स्वामिने" इति । □□

# ४३. श्रेष्ठं कार्यम्

• *शान्तनु चौहान्*

कुण्डलः कश्चन सदाचारी वृद्धः ब्राह्मणः । सः वेदशास्त्रज्ञः आसीत् । कुण्डलस्य पुत्रः सुकर्मा महान् पितृभक्तः । सः पितुः सकाशादेव वेदशास्त्रयोः अध्ययनं करोति स्म । श्रद्धया मातुः पितुश्च सेवां करोति स्म ।

सुकर्मा 'मातृदेवो भव', 'पितृदेवो भव' इति वचनं विनालोपं पालयति स्म । प्रतिदिनं नदीतः जलम् आनीय मातापित्रोः स्नानं कारयति । समये रुचिकरं पाकं कृत्वा परिवेषयति । ग्रीष्मकाले तौ व्यजनेन वीजयति । शीतकाले काष्ठैः अग्निं प्रज्वाल्य शैत्यं निवारयति । रात्रौ जागरितः सन् एव तयोः सेवां करोति । एवं च मातापित्रोः सेवायामेव तस्य सर्वः अपि समयः व्ययितः भवति ।

तस्मिन् काले एव पिप्पलः नाम कश्चन तपस्वी निवसति स्म । सः आश्रमे तिष्ठन् घोरं तपः आचरति । तस्य तपःप्रभावेण मृगाः अपि जातिवैरं परित्यज्य सहैव आनन्देन निवसन्ति स्म ।

पिप्पलः वर्षं यावत् जलम् अन्नं च अस्वीकृत्य वायुमात्रं सेवमानः तपः आचरितवान् । तपसः प्रभावेण तस्य शरीरे अपूर्वं तेजः प्राकाशत । सन्तुष्टाः देवाः तस्य उपरि पुष्पवृष्टिं कृतवन्तः । इन्द्रः प्रत्यक्षः भूत्वा – ''वरं याचतु'' इति उक्तवान् ।

पिप्पलः – ''अशेषं विश्वं मम अधीनं भवतु'' इति वरं याचितवान् । इन्द्रः ''तथास्तु'' इति उक्तवान् ।

परन्तु वरप्राप्त्या पिप्पलः अहङ्कारी जातः । 'प्रपञ्चे मत्सदृशः तपस्वी अन्यः कोऽपि नास्ति । अहमेव सर्वश्रेष्ठः' इति सः चिन्तितवान् ।

पितामहः ब्रह्मा 'पिप्पलस्य गर्वः निवारणीयः' इति निश्चितवान् । अतः सः सारसरूपं धृत्वा पिप्पलस्य समीपं गतवान् । उक्तवान् च – ''भवान् किमर्थम् आत्मानं श्रेष्ठं मन्यते ? एषः भवतः अहङ्कारः । महत् तपः कृत्वा अपि भवान् ज्ञानं न प्राप्तवान् । कुण्डलस्य पुत्रः सुकर्मा भवदपेक्षया ज्ञानी अस्ति । यद्यपि सः यज्ञयागादिकं न कृतवान्, भवान् इव कठोरं तपः अपि न आचरितवान् । तथापि सः बालकः मातापित्रोः सेवया एव तादृशं ज्ञानं प्राप्तवान्'' इति ।

एतेन आश्चर्यचकितः पिप्पलः तदा एव सुकर्मणः समीपं गतवान् । तं पृष्टवान् च – ''भवान् कथम् एतादृशं ज्ञानं सम्पादितवान् ?'' इति ।

सुकर्मा विनयेन पिप्पलं नमस्कृत्य उक्तवान् – ''ब्रह्मन् ! अहं किमपि न जानामि । न मया यज्ञः कृतः, न वा तीर्थाटनं कृतम् । तपः अपि न आचरितम् । अहं तु मातापित्रोः सेवामेव कृतवान् । अहं चिन्तयामि यत् मातापित्रोः सेवापेक्षया श्रेष्ठम् अन्यत् कार्यं नास्ति । तयोः सेवायाः परिणामतः एव अहं कामपि सिद्धिं प्राप्तवान् स्याम्'' इति ।

सुकर्मणः वचनं श्रुतवतः पिप्पलस्य ज्ञाननेत्रे उद्घाटिते । तस्य गर्वः अपि अपगतः । सः विनयशीलः सञ्जातः ।

□□

# ४४. फलं परनिन्दायाः

• *(सं) गङ्गाराम शर्मा*

प्राचीनकाले काशीनगरे कश्चन धर्मात्मा महाराजः आसीत् । सः अत्यन्तं प्रजावत्सलः । न्यायेन राज्यं पालयति स्म ।

कदाचित् महाराजः मृगयार्थम् अरण्यं गतवान् आसीत् । ततः प्रत्यागमनसमये सः आकाशात् अवतरन्तं कञ्चित् देवदूतं दृष्टवान् । सः देवदूतः महाराजस्य समीपम् एव आगत्य उक्तवान् - ''महाराज ! भवतः कृते स्वर्गलोके स्वर्णप्रासादः सज्जीकृतः अस्ति । भवान् तत्र सुखेन वासं कर्तुम् अर्हति'' इति । झटिति सः अन्तर्हितः अभवत् । महाराजः अत्यन्तं विस्मितः, सन्तुष्टश्च अभवत् ।

पुनः कदाचित् महाराजः वार्तां श्रुतवान् यत् 'कश्चन तपस्वी काशीम् आगतवान् अस्ति, उपवने निवसति च' इति । महाराजः तस्य दर्शनार्थम् उपवनं गतवान् । तपस्वी ध्यानमग्नः आसीत् । महाराजः स्वेन नीतानि भक्ष्यभोज्यादीनि तस्य पुरतः स्थापयित्वा उपविष्टवान् ।

बहुकालः अतीतः । तपस्वी नेत्रे न उद्घाटितवान् । सः न ज्ञातवान् अपि यत् पुरतः महाराजः उपविष्टः अस्ति । परं महाराजः चिन्तितवान् यत् एषः तपस्वी मम अवमाननं कृतवान् इति । क्रुद्धः सः पार्श्वे पतितम् अश्वस्य पुरीषं तपस्विनः शिरसि क्षिप्त्वा राजभवनम् आगतवान् ।

कानिचन दिनानि अतीतानि । एकदा रात्रौ सः एव देवदूतः पुनरपि महाराजस्य समीपम् आगत्य उक्तवान् - ''महाराज ! स्वर्गलोके भवतः स्वर्णप्रासादः अश्वपुरीषैः पूर्णः अस्ति । तत्र किञ्चिदपि स्थलं रिक्तं नास्ति'' इति ।

महाराजः तदा ज्ञातवान् यत् 'तस्मिन् दिने अहं तपस्विनः शिरसि अश्वपुरीषं क्षिप्तवान् यत् तस्य एव परिणामः एषः' इति । अनन्तरं सः मन्त्रिणः पुरोहितान् च आहूय मन्त्रालोचनं कृतवान् ।

पुरोहितः उक्तवान् - ''महाराज ! बहवः जनाः भवन्तं विनाकारणं यथा निन्देयुः तथा करणीयम् । तेन एषा समस्या परिहृता भविष्यति'' इति ।

महाराजः अङ्गीकृतवान् । गुप्तचराणां द्वारा स्वस्य विषये एव अपप्रचारं कारितवान् । सर्वेऽपि प्रजाजनाः महाराजस्य निन्दनं कृतवन्तः । परन्तु एकः लोहकारः महाराजस्य निन्दनं न कृतवान् ।

किञ्चिद्दिनानन्तरं सः देवदूतः पुनः आगत्य महाराजम् उक्तवान् - ''महाराज ! स्वर्गलोके भवतः स्वर्णप्रासादः इदानीं स्वच्छः जातः अस्ति । यतः भवतः निन्दकाः सर्वमपि अश्वपुरीषं भक्षितवन्तः । परं प्रासादस्य एकस्मिन् कोणे किञ्चिदिव पुरीषं शिष्टम् अस्ति । यतः कश्चन लोहकारः भवतः निन्दां न कृतवान्'' इति ।

तत्पश्चात् महाराजः वेषपरिवर्तनं कृत्वा तस्य लोहकारस्य समीपं गतवान् । नानाप्रकारैः तस्य द्वारा महाराजस्य निन्दनं कारयितुं प्रयत्नं कृतवान् । परन्तु लोहकारः नम्रतापूर्वकम् उक्तवान् - ''भोः महाशय ! अहं महाराजस्य निन्दां न करिष्यामि । कस्यापि निन्दनं न करिष्यामि । यतः परनिन्दकः सः यस्य निन्दां करोति तस्य पापानि भुङ्क्ते । अहं कस्यापि पापं भोक्तुं न इच्छामि'' इति ।

महाराजः तस्य विचारं श्रुत्वा विस्मितः अभवत् । सः ततः निराशया प्रत्यागतवान् । परन्तु अनन्तरं सः बहु जागरूकतया राज्यं कृतवान् । मरणानन्तरं च स्वर्गं प्राप्तवान् ।

□□

# ४५. पराजयेऽपि जयः

• *(सं) अनिता*

कश्चन साधुः आसीत् । तस्य समीपे एकः शीघ्रगामी अश्वः आसीत् । साधुः तस्मिन् बहु स्निह्यति स्म । तं सुन्दरम् अश्वं प्राप्तुम् अन्येऽपि इच्छन्ति स्म । यद्यपि केचन बहु धनं दत्त्वा अश्वं क्रेतुम् इष्टवन्तः, तथापि साधुः तं विक्रेतुं न इच्छति ।

एकदा सः साधुः अश्वस्य उपरि उपविश्य गच्छन् आसीत् । तदा कश्चन लुण्ठाकः तं पश्यति । वेगेन गच्छन्तम् अश्वं दृष्ट्वा सः चिन्तितवान् यत् 'यथाकथञ्चित् एषः अश्वः मया प्राप्तव्यः' इति । अतः सः साधोः समीपं गत्वा उक्तवान् -"भोः साधो ! एषः अश्वः मह्यम् आवश्यकः" इति ।

साधुः उक्तवान् -"किमर्थं भवते ? अश्वः मह्यमेव आवश्यकः" इति ।

लुण्ठाकः वदति -" मम कार्यं तु लुण्ठनम् अस्ति । लुण्ठनं कृत्वा शीघ्रमेव मया पलायनं करणीयं भवति । एतदर्थं शीघ्रगामी अश्वः आवश्यकः" इति ।

साधुः उक्तवान्-"भोः, भवतः कार्यं लुण्ठनम् अस्ति । मम कार्यम् अस्ति जनानां सेवा । एतदर्थम् अहं सर्वत्र गच्छामि । अतः शीघ्रगामी अश्वः आवश्यकः । एतमेव अश्वं भवान् अपि इच्छति । यदि आवयोः कार्यस्य तोलनं करोमि तर्हि एषः अश्वः मम समीपे भवति चेत् वरम् इति भाति । तेन अश्वस्य उपयोगः जनानां साहाय्यार्थं भवति । तस्य जीवनमपि सार्थकं भवति" इति ।

साधोः वचनात् लुण्ठाकः कुपितः जातः । सः उक्तवान् - "एतम् अश्वम् भवतः सकाशात् कथमपि अहं प्राप्नोमि एव" इति ।

साधुः पुनरपि उक्तवान् - "भवान् प्रयत्नं करोतु । अहं प्रज्ञापूर्वकं तु एतम् अश्वं भवते न दास्यामि । एतदपि स्मरतु भवान् यत् यदा एषः अश्वः भवतः वशम् आगमिष्यति तदा 'अश्वः भवदीयः एव' इति अहम् अङ्गीकरिष्यामि ।"

एवं द्वयोः मध्ये सन्धिः जातः । अनन्तरं द्वौ अपि स्वकार्यार्थं गतवन्तौ ।

कानिचित् दिनानि अतीतानि । कदाचित् सः साधुः अश्वम् आरुह्य कुत्रचित् गच्छन् आसीत् । तदा सः एकं भिक्षुकं दृष्टवान् । भिक्षुकः बहुकष्टेन चलन् आसीत् । तस्य मुखं वस्त्रेण आच्छादितम् आसीत् । तं दृष्ट्वा साधुः अश्वतः अवतीर्णवान् । साहाय्यार्थं तस्य समीपं गतवान् । तं पृष्टवान् च - "भोः, भवान् किम् इच्छति ? किम् आवश्यकम् ?" इति ।

तदा सः भिक्षुकः - "यदि भवान् साहाय्यं कर्तुम् इच्छति तर्हि भवतः अश्वस्य उपरि माम् उपवेश्य वैद्यालयं नयतु" इति उक्तवान् । साधुः तस्य वचनं श्रुत्वा तम् अश्वस्य उपरि आरोपितवान् । स्वयं पादाभ्यां गन्तुम् उद्युक्तः जातः ।

तावदेव सः भिक्षुकः शिरसि आच्छादितं वस्त्रं क्षिप्तवान् । स्वस्य नैजस्वरूपं दर्शयन् उक्तवान् च - "भोः साधो ! मम मुखं सम्यक् पश्यतु । अहं भिक्षुकः न । अहं सः एव लुण्ठाकः अस्मि यस्मै भवान् एतम् अश्वं दातुं न सिद्धः आसीत् । अद्य भवान् स्वयमेव अश्वं मह्यं दत्तवान् अस्ति । अद्य

आरभ्य एषः अश्वः मम एव'' इति ।


साधुः वस्तुस्थितिं ज्ञातवान् । सः – ''अहं भवता उक्तम् अङ्गीकरोमि । एषः अश्वः भवतः एव । किन्तु अहम् अन्यत् किञ्चित् निवेदयामि यत् भवान् मत्तः एतम् अश्वं कथं प्राप्तवान् इति कमपि मा वदतु । यतः तेन जनाः भिक्षुकेषु कदापि विश्वासमेव न कुर्युः । भिक्षुकेभ्यः किमपि न यच्छेयुः च । एतेन भिक्षुकाणां जीवनं कष्टं भवेत्'' इति उक्तवान् । साधोः वचनं लुण्ठाकः अङ्गीकृतवान् । अश्वं प्राप्य सः आनन्देन गृहं गतवान् ।

साधुः अपि स्वगृहम् आगतवान् । सः भोजनं न करोति, निद्रां न करोति । तस्मै किमपि न रोचते । सः पुनः पुनः अश्वस्य स्मरणं करोति । रात्रौ निद्रितुं प्रयत्नं करोति । तथापि निद्रा न आयाति । मध्यरात्रे सः कमपि ध्वनिं श्रुत्वा झटिति उत्थाय उपविष्टवान् । ध्वनिः कुतः आगतः इति द्रष्टुं बहिः आगतवान् । तत्र सः एव लुण्ठाकः स्थितवान् आसीत् । तं दृष्ट्वा आश्चर्येण सः पृष्टवान् – ''पुनः किमर्थम् आगतवान् ? भवते दातुं मम समीपे किमपि नास्ति'' इति ।

लुण्ठाकः उक्तवान् – ''अहं भवतः सकाशात् किमपि स्वीकर्तुं न आगतवान् । अपि तु अश्वं भवते एव प्रत्यर्पयितुम् आगतवान्'' इति ।

लुण्ठाकस्य वचनं श्रुत्वा साधुः अतीव आश्चर्यचकितः अभवत् । अश्वस्य दर्शनेन सः अत्यन्तम् आनन्दम् अनुभूतवान् । तस्य नेत्राभ्याम् आनन्दाश्रूणि पतितानि । सः प्रीत्या अश्वस्य शरीरं हस्तेन स्पृष्टवान् ।

निमेषद्वयम् अतीतम् । तावता साधुः चिन्तितवान् यत् 'यः लुण्ठाकः अश्वं प्राप्तुं तावन्तं प्रयत्नं कृतवान्, सः प्राप्तेः अनन्तरं किमर्थं तं प्रत्यर्पितवान्' इति । अतः सः लुण्ठाकं तस्य कारणं पृष्टवान् ।

लुण्ठाकः उक्तवान् – ''भवतः अश्वं प्राप्य अहं बहु उत्साहेन गृहं गतवान् । गृहे भवता उक्तस्य वाक्यस्य स्मरणं पुनः पुनः कृतवान् । भवतः विचारः मम विचारस्य अपेक्षया कियान् उदात्तः अस्ति ! अहं केवलं स्वार्थं चिन्तयन् मम लाभाय कार्यं करोमि । किन्तु भवान् परहितं चिन्तयन् सर्वेषां लाभाय कार्यं करोति । यद्यपि भवतः प्रियतमम् अश्वम् अहं चोरितवान्, तथापि भवान् तु असाहायकानां, भिक्षुकाणां चिन्तनमेव कृतवान् । 'अश्वः अपहृतः' इति दुःखे सति अपि परहितमेव चिन्तितवान् । अतः एव 'एतां घटनां कुत्रापि कमपि मा वदतु । तेन भिक्षुकाणां जीवनं कष्टं भवति' इत्यादि सूचितवान् । एतत् सर्वं विचार्य अहम् अन्ते निर्णीतवान् यत् एषः अश्वः भवतः समीपे एव भवतु । अहम् अश्वं यद्यपि जितवान् तथापि पराजितः अस्मि । भवान् तु पराजितः अपि जयं प्राप्तवान् । किञ्च भवतः सेवाव्रतं दृष्ट्वा आनन्दितः अहम् । इदानीम् अहमपि सङ्कल्पं कृतवान् अस्मि यत् अद्य आरभ्य अहं लुण्ठनं न करोमि । दीनजनानां सेवां करोमि'' – एवं वदन् सः लुण्ठाकः साधोः चरणयोः पतितवान् ।

□□

# ४६. शृगालस्य चातुर्यम्

◆ *सावित्री रामकृष्णन्*

कस्मिंश्चित् अरण्ये कश्चन सिंहः वसति स्म । सः कदाचित् एकं मृगं मारितवान् । तस्य मृतशरीरं स्वस्य गुहां प्रति आनीतवान् । ततः तत्र अर्धभागं तदानीम् एव खादितवान् । तेन तस्य बुभुक्षा शान्ता अभवत् । मृगस्य शरीरस्य अपरः अर्धभागः गुहायाम् एव पतितः आसीत् ।

कानिचन दिनानि अतीतानि । तत्र स्थितस्य मृगशरीरस्य कारणतः गुहायां सर्वत्र महान् दुर्गन्धः प्रसृतः । सिंहस्य अपि अस्वास्थ्यम् अभवत् । अतः सः गुहातः बहिः न गतवान् । तत्रैव स्थित्वा "सर्वे मृगाः आगत्य मृगराजस्य मम दर्शनं कुर्वन्तु" इति वार्तां प्रेषितवान् ।

सर्वे अपि मृगाः मृगराजस्य दर्शनार्थं गुहायाः समीपम् आगतवन्तः । प्रथमं भल्लूकः गुहां प्रविष्टवान् । सः तत्र स्थितं दुर्गन्धं सोढुम् अशक्नुवन् अङ्गुलिभ्यां नासिकां पिधाय सिंहस्य समीपम् आगतवान् ।

तं दृष्ट्वा सिंहः - "भोः भल्लूक ! किमर्थं तथा करोति ?" इति पृष्टवान् ।

"महाराज ! अत्र महान् दुर्गन्धः अस्ति । अहं सोढुमेव न शक्नोमि" इति उक्तवान् भल्लूकः ।

भल्लूकस्य वचनं श्रुतवतः सिंहस्य महान् कोपः आगतः। सः - "रे दुष्ट ! 'मृगराजस्य मम गुहायां दुर्गन्धः अस्ति' इति वदतः भवतः कियत् धाष्टर्यम् !" इति उक्त्वा भल्लूकं प्रहृतवान् । भल्लूकः मूर्च्छितः सन् तत्र एव पतितः ।

अनन्तरं कश्चन कपिः शनैः अन्तः प्रविष्टवान् । सः अपि दुर्गन्धं सोढुं न शक्तवान् । तथापि मूर्च्छितं भल्लूकं दृष्ट्वा सः प्रवृत्तम् ऊहितवान् । सिंहः तं पृष्टवान् - "भोः वानर ! मम गुहायां दुर्गन्धः अस्ति किम् ?" इति ।

वानरः विनयेन - "महाराज ! भवतः गुहायां कथं दुर्गन्धः भवितुम् अर्हति ? वस्तुतः अत्र महान् सुगन्धः एव अस्ति" इति वदन् नासिकां विस्तृतां कृत्वा सुगन्धाघ्राणनस्य अभिनयं कृतवान् ।

परन्तु तेन अपि सिंहः कुपितः अभवत् । सः - "रे वानर ! असत्यं वदति वा ?" इति वदन् तम् अपि प्रहृतवान् । वानरः मूर्च्छितः सन् पतितः ।

अनन्तरं कश्चन शृगालः अन्तः प्रविष्टवान् । चतुरः सः मूर्च्छितं भल्लूकं वानरं च दृष्ट्वा उपायमेकं मनसि चिन्तितवान् । सिंहः तम् उक्तवान् - 'भोः शृगाल ! सत्यं वदतु, मम गुहायां सुगन्धः अस्ति, उत दुर्गन्धः ? यदि असत्यं वदति तर्हि भवन्तम् एकेन एव प्रहारेण यमलोकं प्रेषयामि" इति ।

चतुरः शृगालः विनयेन उक्तवान् - "महाराज ! अहं दिनद्वयात् अस्वस्थः । जलदोषेण पीडितः अस्मि । पीनसः मां नितरां बाधते । वस्तुतः अहं किमपि आघ्रातुमेव न शक्नोमि । अतः अहं ज्ञातुमेव न शक्नोमि यत् अत्र सुगन्धः अस्ति उत दुर्गन्धः । कृपया मां क्षाम्यतु" इति ।

शृगालस्य चातुर्यपूर्णं वचनं श्रुत्वा सिंहः नितरां सन्तुष्टः । सः तस्मै मन्त्रिपदवीं दत्तवान् ।

□□

# ४७. ब्रह्मणः स्यूत

◆ *मनोरमा*

सृष्टिकर्ता ब्रह्मा सृष्टेः आरम्भकाले कदाचित् मनुष्यं स्वसमीपम् आहूतवान् । तं "भवान् किम् इच्छति ?" इति प्रीत्या पृष्टवान् । मनुष्यः उक्तवान् - "अहम् उत्तमरीत्या जीवितुम् इच्छामि । सुखं शान्तिं च इच्छामि । यथा अहं सुखी भवेयं तथा माम् अनुगृह्णातु" इति ।

ब्रह्मा मनुष्याय स्यूतद्वयं दत्त्वा उक्तवान् - "एतत् स्यूतद्वयं गृह्णातु । अनयोः एकतरस्मिन् स्यूते भवतः प्रतिवेशिनः पुरुषस्य दुर्गुणाः सन्ति । एतं स्यूतं सर्वदा भवतः पृष्ठभागे एव स्थापयतु । कदापि तम् उद्घाट्य मा पश्यतु । अन्येभ्यः मा दर्शयतु अपि । अन्यस्मिन् स्यूते भवदीयाः दुर्गुणाः सन्ति । तं स्यूतं सर्वदा भवतः पुरतः एव स्थापयतु । पुनः पुनः तम् उद्घाट्य पश्यन् भवतु" इतिं ।

मनुष्यः स्यूतद्वयम् अपि भक्त्या स्वीकृतवान् । परन्तु तयोः स्थापनसमये सः विस्मरणवशात् दोषं कृतवान् । सः स्वस्य दुर्गणैः पूरितं स्यूतं पृष्ठतः स्थापितवान्, अन्येषां दुर्गुणैः पूरितं स्यूतं पुरतः स्थापितवान् । पृष्ठतः स्थापितं स्यूतं पुनः कदापि न उद्घाटितवान् । पुरतः स्थापितं स्यूतं तु पुनः पुनः उद्घाट्य दृष्टवान् । अन्येभ्यः दर्शितवान् च ।

अतः एव मनुष्यः अद्यापि स्वस्य दुर्गुणान् न्यूनतां च कदापि न चिन्तयति । परम् अन्येषां दुर्गुणान् न्यूनताः वा पुनः पुनः चिन्तयति, तद्विषये अन्यान् अपि वदति । स्वयं तु दोषरहितः इत्येव चिन्तयति । एतदेव मनुष्यस्य अशान्तेः दुःखस्य च मूलम् ।

□□

# ४८. स्वर्गप्रवेशः कस्य ?

◆ *सुचेता नवरत्न*

एकदा त्रयः पुरुषाः स्वर्गं प्रति प्रस्थिताः आसन् । तेषु प्रथमः महान् पण्डितः । द्वितीयः पुरोहितः । अन्तिमः सामान्यः कृषिकः ।

ते त्रयः अपि स्वर्गद्वारं गत्वा अन्तः प्रवेष्टुम् उद्युक्ताः आसन् । तदा द्वारपालकः तान् पृष्टवान् - "भवन्तः कीदृशानि सत्कार्याणि कृतवान्तः, येन स्वर्गप्रवेशम् इच्छन्ति ?" इति ।

तदा पण्डितः उक्तवान् - "अहं बहून् उत्तमान् ग्रन्थान् अधीतवान् अस्मि । सर्वाणि शास्त्राणि अपि मम मुखे एव सन्ति । अतः अहमेव स्वर्गं गन्तुम् अर्हः" इति ।

द्वारपालकः उक्तवान् - " भोः पण्डित ! भवान् बहून् ग्रन्थान् पठित्वा महत् ज्ञानं सम्पादितवान् इत्येतत् सत्यमेव । परन्तु भवान् अधीतम् एकम् अपि अंशं स्वजीवने व्यवहारं न आनीतवान् । अतः भवान् स्वर्गं प्रवेष्टुम् अनर्हः" इति ।

तदा पुरोहितः उक्तवान् - "अहं बहून् यज्ञयागादीन् कृत्वा पुण्यं सम्पादितवान् अस्मि । अतः अहमेव स्वर्गं गन्तुम् अर्हः" इति ।

"भवान् स्वसुखाय, स्वक्षेमाय केवलं यज्ञयागदीन् कृतवान् । स्वार्थी पुरुषः स्वर्गं प्रवेष्टुं न अर्हति" इति उक्त्वा द्वारपालकः तम् अपि निराकृतवान् ।

ततः कृषिकः उक्तवान् - "अहं तु साधारणः कश्चन कृषिकः । अहं मम गृहं क्षेत्रं च परितः स्थितेभ्यः पिपासया बुभुक्षया वा पीडितेभ्यः पथिकेभ्यः जलम् आहारं च दत्तवान् अस्मि । एतदेव मया कृतम् उत्तमं कार्यम् । अहं न जानामि यत् अहं स्वर्गं प्रवेष्टुम् अर्हः, उत न" इति ।

"भवान् एव स्वर्गं प्रवेष्टुम् अर्हति । यतः भवान् स्वात्मानं परितः स्थितानां जनानां दुःखं दूरीकर्तुं प्रयत्नं कृतवान् अस्ति । पाण्डित्येन, यज्ञयागादिना वा स्वर्गप्रवेशः न लभ्यते । अपि तु अन्येषां दुःखनिवारणेन लभ्यते" - इति वदन् द्वारपालकः तं कृषिकं स्वर्गस्य अन्तः प्रवेशितवान् ।

□□

# बालकथाकौमुदी

कथाभिः बालानां कल्पनायाः विस्तारः भवति, लोकज्ञानं वर्धते, व्यवहारशिक्षणञ्च भवति। अतः तान् उद्दिश्य सुसंस्कारदायिन्यः, प्रेरणादायिन्यश्च कथाः श्रावणीयाः। परम् अद्यत्वे एतादृशीनां कथानां सङ्ग्रहः कदाचित् दुर्लभः एव। अत्र तादृशः कश्चन प्रयासः कृतः अस्ति। देशस्य नानाभागे निवसद्भ्यः लेखकेभ्यः लिखिताः अनूदिताश्च उत्तमाः काश्चन कथाः सम्पाद्य अत्र सङ्कलिताः सन्ति।

बालैः अपि अवगमनयोग्या सरला भाषा, सुभगा शैली, सुन्दराणि च चित्राणि अस्य सङ्ग्रहस्य वैशिष्ट्यानि।